# FOREWORD.



Kāsyapa is one of the most ancient sages of India from whom the numerous body of Brahmans belonging to Kāsyapa Gotra trace their origin. His exact period, as that of most other Vedic men and institutions, is yet an unsolved mystery.

This valuable work, "Kāsyapa Samhita" was one of the manuscripts which came to the possession of H. H. Sri Yatiraja Swamy of Melkote years ago through the priest of the sacred temple there. Glancing through its contents, he was struck by its tantric and medical usefulness, and decided to make it available for the public. As the manuscript was worn with age and not in perfect condition, he looked about for other manuscript copies of the work, and after considerable search, found one in the Government Oriental Library, Madras, and one in the Theosophical Library at Adyar. By collating the three manuscripts a fairly satisfactory text was prepared, and through the kind offices of the then Muzroi Commissioner, Mr. Rajakarya-pravina P. G. D'Souza, the Government of Mysore were pleased to advance the cost of its publication.

In Indian Medical bibliographies there is mention of a work "Kāsyapa Tantra," and also of another "Kāsyapeeya Roganidānam"; but no manuscript of the former is said to be available. Further, in the catalogue of Brunnell's Tanjore manuscripts, there is mention of a "Kāsyapa Samhita," but that is an exposition by Siva, in answer to Pārvathi, of the causes and cures of diseases, such as 20 kinds of Kushta, 12 kinds of Gulma, and so on.

In the work before us, sage Kāsyapa expounds to Gowtama in metrical form, the nature of serpents, their poisons, and their cures. The name of the work is to be found among the 108 Samhitas of the Pāncharātra school of worship mentioned in the ancient work "Pādma Samhita". The appropriateness of classing this among Pāncharātra works lies in the fact that a large part of it deals with māntric incantations which remove serpents or render their poisons innocuous. The latter portion of the work classifies the 16 varieties of snakes, and gives the herbal antidotes of their poisons. As such its importance may be guessed in a country where tens of thousands die annually by snake-bites. Therefore not only its publication, but its translation into English and the vernaculars would seem to be of imminent value.

In the delightful volume on Indian Medicine published by that scholar-prince, H. H. the Thakore Saheb of Gondal, in 1896, he quotes the Greek historian, Arrian, and Nearchus, to the effect that Alexander found his own Greek Physicians unable to cure the snake-bites common in the Punjab, and sought the aid of Indian Physicians whose successes won his admiration. His Highness adds, "In face of the fact that European Toxicologists are still in search of a specific for snake-poison, the Indian Physicians of 2200 years ago might well be proud of their skill."

The publication of a work like this would be celebrated as a scientific event in the countries of the West, but here we are still in the stage of selling our birth-right for a mess of pottage. Oblivious of the true value of many old manuscripts, we lightly pass them over as lumber, whereas their high scientific merit should really aid and advance civilization!

H. H. Sri Yathiraja Swamy has placed the learned world under further indebtedness to him, having already won their esteem by his three former publications, the monumental "Pādma Samhita," "Sringāra Prakāsa," and "Tāpasa Vatsarāja." In the winter of his age his tireless mind is avid for solid literary work, and the

volume before us is not to be the last of his great contributions. Nevertheless it is one of the most valuable, and should prove of equal interest to antiquarians and modern scientists.

Mysore,
*April*, 1933.

**G. R. JOSYER,**
M.A., F.R.E.S., F.M.U.



# काश्यप संहिता

सर्वविधविषचिकित्साप्रतिपादिका

श्रीयदुगिरि

यतिराजसंपत्कुमारसयमिभिः परिष्कृता

कवीर मुद्रणालये, मुद्रिता

चेन्नपुरी

शकाङ्कः—१९३३.

श्रीः

# प्रस्तावना



## प्रबन्धोद्दिधीर्षा

अथ कदाचित् प्रसङ्गसङ्गत्या परिशील्यमानेषु प्राचीनप्रबन्धेषु आगमशाखायां काश्यपसंहिताख्यया अङ्कितः कोश एकः गोचरीभूतः, आमूलचूडं परामर्शे कृते काश्यपेन मुनिना गौतमायोपदिष्टः गारुड-पञ्चाक्षरीमन्त्रवर्गनिरूपकः मन्त्रौषधाभ्यां सर्पादिविषचिकित्सारूपः प्रतिपाद्योऽर्थः समवागम्यत। विशिष्य समालोडने विहिते सर्पादि-विषजन्तुजाति, दंश, काल, देश, प्रकारादीनां निरूपणेन वनपदजनपदयो-रविशेषेण प्रातिस्विकतया च तत्तत्प्रदेशसुलभौषधिधातुद्रव्यादीनां प्रप-ञ्चनेन च हेतुना महोपकारकोऽयं लोकानामार्षो निबन्ध इति तत्प्र-काशने मानसमभिनिवेशेन समग्राहि।

ग्रन्थसंशुद्धये मातृकान्तरमार्गणे बहुत्र बहुधा कृतेऽपि नांश-तोऽपि मातृकान्तरमलभ्यत। उपलब्धचरीमेवैकां मातृकामवष्टभ्य सुदूरमुद्बलन्त्यां पर्याप्तद्रव्यदुर्गततया विलीयमानायां कल्लोलपरम्परा-

यामिवोदन्वतः सहृदयलाकस्य समुत्कलिकायां अयमर्थः राजकीय धर्मदायाधिकरणाध्यक्षस्य कर्णपथमवगाह्य मीमांसापदमनीयत । अथ स तु महामनाः सुगृहीतनामा राजकार्यप्रवीण. पि. जि. डिसोजा. बि. ए. बि. एल्. Rajakaryapravina P. G. D'Souza B.A., B.L., Member of Council Mysore State. प्रीयमाणः सर्वीयोपकारक्षमतां ग्रन्थस्यावगम्य स्वाधिकरणतोऽशतोऽर्थेन्सर्ग माशास्यानुपदं मुद्रणं निरणैषीत् । ततश्च ग्रन्थशोधनादिभर्मणि श्रीमत्परमहंसेत्यादि-बिरुदाङ्कितानां श्रीयदुगिरियतिराजमठाधिपतीनां प्रत्यवेक्षणं अनन्यसाध्यं समुचितं निश्चित्य सर्वं कृत्यभारं तदायत्त मकरोत् । अथ च दैवयोगवशात् लब्धमपि मातृकान्तरद्वयं आद्यमातृकासकुल्यमेवात्यशुद्धिविपर्यासत्रुटिजटिलमेव अवर्तत । अगत्या तदेव मातृकात्रयमवलम्ब्य यथायोगं परिष्कृत्य उपरितनं अवशिष्टं कार्यभारं निजमठव्यापारानवकाशं मन्वानाः आचार्यपादाः तत्सर्वं राजशासनेन साकं अस्मद्वशं विधाय कृपयाऽनुजगृहुः ।

वर्तमाने चैवंविधे व्यतिकरे महीशूरमहाराजास्थानलब्धपण्डित-रत्नबिरुदानां लक्ष्मीपुराभिजनानां श्रीनिवासाचार्याणां अनुमोदन-मपि मुद्रणविलम्बमपानुदन् संविधानसामग्रीमुद्बृंहयति स्म । तेनैतेन व्यवसितेन जातविस्रम्भाः आशंसामहे-ते तु श्रीनिवासाचार्याः अधि-करणानुमतचरमुद्रणस्य ग्रन्थान्तरस्य च बहूपयोगितामवेद्य अनुपदं-सहायसंपत्तये राजाधिकरणमावर्जयेयुरिति ।

## मातृकान्तरगवेषणम्

गते च कतिपये गणरात्रे मदरास् चेन्नपत्तनोपशल्यभूते अडैयार् नामनि प्रदेशे स्थापितस्य पुस्तकभाण्डागारस्य कोशसङ्ग्रहे नातिचिरप्रतिरूपिता मातृकैका अवालोक्यत। तदात्वे च मदरास् नगरे प्रतिष्ठापिते महति राजकीयकोशभाण्डागारे अपरं मातृकान्तरमस्तीति प्रतीतिरश्रूयत। ततश्च प्रस्तुतोद्यमनिर्वहणाय प्रथमकोशस्य अडैयारस्थानस्थितकोशेन साकं संवादस्समसाध्यत. अनुपदमेव राजकीयभाण्डागरकोशस्य प्रतिच्छन्दः पर्यगृह्यत। एवं तिसृणां मातृकाणामवलम्बेन महता प्रयासेन अधिकृतं प्रस्तुत-मुद्रणं अकारि.

## सामान्यतो मातृकाकोशदशानिर्देशः

१. प्रथमं सम्पादितः श्रीयादवगिरिस्थितश्रीनारायणमन्दिरार्चकभेदाचार्यसङ्गृहीतसंहिताकोशेष्वन्यतमः ग्रन्थलिपिः, तालपत्रात्मकः, द्वादशाध्यायमात्रग्रन्थापरिमाणः बहुस्खलितविपर्यस्तप्रबन्धशरीरः (क) संज्ञितः.

२. द्वितीयः अडैयारकोशागारीयः पुस्तपत्रात्मकः आन्ध्रलिपिः सर्वतः (क) कोशसकुल्यः (ख) संज्ञितः.

३. तृतीयः मदरास् राजकीयकोशागारगतः तालपत्रात्मकः ग्रन्थलिपिः त्रयोदशाध्यायात्मकः समग्रसंहिताशरीरः

ग्रन्थपातविपर्यासयोः प्राक्तनकोशद्वयमनतिशयानः (ग) संज्ञितः. एवमपि क्वचित् क्वचित् पाठशुद्धिरमुतः प्रर्यगृह्यत। एतास्तिस्रोऽपि मातृकाः अगृहीतगीर्वाणवाणीसंस्कारेण मूलमातृकाक्षाररेखापरामर्शविहस्तितचेतसा केन चिद्वैवेयेन प्रतिरूपिताः अकृतस्वस्वमूलकोशसंवादा इति ता एव आत्मानमादर्शयन्ति द्रष्टॄन् विपश्चितः। सत्यप्येवं नष्टाश्वदग्धरथन्यायेन तिसृणामन्योन्यसंवादसम्मेलनेन कथञ्चित् ओतप्रोतसमीकारादिभिः संहितायाश्शरीरसंस्थानं अखण्डितसन्धिबन्धं समायोजि—

**प्रातिस्विकशः संहिताशरीरावयवविमर्शः**

आदितः अध्यायचतुष्टयम्.

१. २. ३. ४.

एतेषु चतुर्षु अध्यायेषु अविपर्यस्ततुल्यानुपूर्वीकः अखण्डितो ग्रन्थः त्रिष्वपि कोशेषु असङ्कुचितशरीरो दृश्यते। कण्टकक्षतघर्मस्फोटादिवदन्तरान्तरा दृश्यमनः वर्णविकारः..उद्वर्तनादिना व्यपोहार्हः नाङ्गवैकल्याय भवाति।

**पञ्चमोऽध्यायः**

२. पञ्चमेऽध्याये समुदिततया विषहर मन्त्र यन्त्रविधानम् "नमस्ते" इयादिना आरभ्यते. मुद्रित ४५ पुटादारभ्य ४६ पुटान्तपर्यन्तम् मन्त्रमूर्तेः ध्यानप्रकारं प्रतिपादयत् सार्धं श्लोकदशकं त्रिष्वपि कोशेषु समानमालोक्यते. ततः (क) (ख) कोशयोः मु. ४७ पुटे.

ओम् ठम्. इत्यादिना मन्त्र वर्ग प्रकारः गद्यबन्धेन आरब्धः मु. ४८ पुटान्ते एव समाप्यते। मु ४९ तमपूटे अतःपरमाराधनक्रमः गद्यरूपः उपक्रान्तः मु. ५३ पुटे पङ्क्तिचतुष्टये विश्राम्यति। तदनन्तरं तस्मिन्नेव पुटे "काश्यपः—शनिवारस्य रात्रादौ दिवाकरदिनावधि" इत्यादिः पद्मादिसर्पाणां आधिपत्यभोग्यकाल विभागं प्रतिपादयन् पद्यबन्धः श्लोकनवकेन मु. ५४ तमे पुटे सप्तमपङ्क्तौ अवसीयते। अथ अष्टमपङ्क्तौ "यन्त्रविधानं" इत्यारभ्य गद्यबन्धेन प्रक्रान्तः यन्त्रविधानमाचक्षाणः वाक्यराशिः मु. ६२तमपुटान्ते समाप्यते। पश्चात् ६३ पुटे "पीतं वज्रचतुष्कोणं पार्थिवं श क्रदैवतम्" इत्यादिः, ४६ पुटान्तविश्रान्तस्य "वातानां मण्डलेषु स्मरतु विषगणस्तोभसङ्क्रामणादौ" इत्यस्य शेषभूतः ग्रन्थः पद्यबन्धेन प्रक्रान्तः अनुस्यूतः ६८ पुटे अध्यायं समापयति। (ग) कोशे तु अध्यायादितः ४६ पुटान्तस्थ "सङ्क्रामणादौ" इत्यन्तं सार्धश्लोकदशकं विलिख्य पश्चात् अनुगततया ६३ पुटे "पीतं वज्रसमुत्कीर्णं" इत्यादिना संयोज्य ६८ पुटे अध्यायः समापितः। (ग) कोशरीत्या आहत्य चत्वारिंशत् श्लोकात्मकः अयमध्यायो निष्पद्यते। प्रतिज्ञानुसारेण मन्त्रयन्त्राराधनानामपि दिग्दर्शनं तदेकतानेषु अध्यायेष्वधस्तादुपरिष्टाच्च तत्र तत्र पद्यबन्ध एव सूचितं समालोक्यमानं न विकलतामुपस्थापयति। एतेन (ग) कोशोपात्तपाठक्रम एवास्याध्यायस्य निरवद्यं समग्रं शरीरमिति साधीयसी दृष्टिः।

यः पुनः (क) (ख) कोशपाठमनुसृत्य मुद्रितः सप्तचत्वारिंशत्तम (४७) पुटादारभ्याष्टचत्वारिंशत् (४८) तमपुटे समाप्तः, यश्च एकोनपञ्चाशत्तम (४७) पुटादुपक्रम्य त्रिपञ्चाशत्तम (५३) पुटे पङ्क्तिचतुष्टये विश्रान्तः, योऽपि च चतुःपञ्चाशत्तम (५४) पुटे नवमपङ्क्तिमनुसीव्य द्विषष्टितमपुटे ६२ अवसितः, मन्त्राराधनयन्त्राणां विधानं प्रतिपादयन् वाक्यगणः स संहितापरिपाटीतो बहिरङ्ग एव । व्याख्यानरूपोऽयं सुखावबोधाय मध्ये अविचार्य सन्दानित इत्यपि च प्रतिपत्तिः निर्व्यलीका भवति ।

यत्पुनः त्रिपञ्चाशत्तम (५३) पुटस्थपञ्चमपङ्क्ति प्रभृति-चतुःपञ्चाशत्तम (५४) पुटस्थसप्तमपङ्क्त्यन्तस्थाने दृश्यमानं 'काश्यपः' इति वक्तृनिर्देशोपक्रमं श्लोकनवकं, तत् न प्राक्तनं न वोपरितनं ग्रन्थमन्वेतुं नापिवा तत्र स्थाने स्थातुं क्षमं भवति । प्रत्युत पूर्वापरानुबन्धविमुक्तं नियतस्थानात् प्रभ्रष्टं त्रिशङ्कुवदन्तराले सीदति । एतत्प्रतिपाद्यार्थस्तु पद्मादिसर्पाणां आधिपत्यभोग्यकालविभागमासूत्रयति । एतस्यानुगुणं स्थानं प्रकरणं च चतुर्थाध्याये त्रयस्त्रिंशे (३३) पुटे चतुर्दशपङ्क्तिमारभ्य चतुस्त्रिंशे (३४) पुटे दशमपङ्क्तिपर्यन्तं, चत्वारिंशे (४०) पुटे त्रयोदश पङ्क्तिमारभ्य एकचत्वारिंशे (४१) पुटे सप्तमपङ्क्तिपर्यन्तं दृश्यमाने पद्मादीनां उदयकालविभागदिग्देशाधिपत्यसम्भवस्थाननिरूपके ग्रन्थभागे यत्र कुत्र वा सुसङ्गतं भवितुमर्हति। प्रत्युत "काश्यपः" इति प्रश्नोत्तर-

प्रतिवचननिर्देशस्य तत्र योगो निरवकाशः । सम्प्रतिपन्नमातृकान्तरावलोकनात् समाधेयोऽसौ विचारः ।

### षष्ठाध्यायः ।

अयमध्यायः मातृकात्रितयेऽपि एकरूपः अविपर्यस्तग्रन्थस्थितिः ।

### सप्तमाध्यायः.

अयमध्यायस्तु "शेषादिमन्त्रान् वक्ष्यामि इत्यादिना सुमुखारम्भो भवति । (क) (ख) पुस्तकयोस्तु अध्यायादौ । मु. ७९ पुटस्थं ६९ तमं कौटिल्यं भोगसङ्कोचः" इत्यादि श्लोकमुपपक्रम्य अध्यायसमाप्तिपर्यन्तं . स्थितं षष्ठाध्यायग्रन्थं लिखित्वा तदनन्तरं "शेषादिमन्त्रान्" इत्यादिर्यथावस्थितपाठक्रमः सप्तमाध्यायग्रन्थः परिसमाप्य लिखितः । अन्ते "इति सप्तमोऽध्यायः" इति अविपर्यस्ता अध्यायसङ्ख्या चास्ति । (ग) कोशस्तु अविक्लबानुपूर्वीकं सप्तमाध्यायग्रन्थशरीरं उद्योतयति ।

### अष्टमाध्यायः.

अस्याध्यायस्यारम्भे "दर्वीकरा मण्डलिनः राजिला वैतकास्तथा" इत्यादिना विषजन्तूनां दर्वीकरादिवर्गभेदचतुष्टयस्य समाख्यया उद्देशः अभिहितः । समनन्तराध्यायेषु उद्देशक्रममनतिक्रम्य मण्डल्यादीनां विषचिकित्सा प्रातिस्विकतया स्वस्वानन्तर्येण निरूपिता जागर्ति ।

अस्मिन्नध्याये न्यायप्राप्तायाः दर्वीकरचिकित्सायाः सप्रपञ्चनिरूपणेन समाप्तिः निरनुक्रोशा सम्पद्यते। (क) (ख) कोशयोरपि तथैवोपचितः गुलिकानिरूपणान्तं आरूढः ग्रन्थसन्दर्भः। ततः परं नाध्यायो निगमितः, न वा चिकित्सान्तर मुपक्षिप्तम्। प्रत्युत समनन्तरलिखितपूर्व नस्याञ्जनप्रकरणगत "शिरीषमाधवी गुञ्जा" (पु. ८९) इत्यादिकमारभ्य (९०पुटे) "हिङ्ग्वम्बु—विषहृद्गणः" इत्यन्तग्रन्थभागं लिखित्वा, तदनुबन्धेन अनालक्षितसन्धिबन्धतया नवमाध्यायग्रन्थं समग्रं विलिख्य अन्ते "इति नवमोऽध्यायः" इति निगमितम्। अत्र अष्टमस्याध्यायस्य परिसमाप्तिः क्वेति वा गुलिकानिरूपणग्रन्थानन्तरं कीदृक् कियान्वा अवशिष्टो भागोऽस्तीत्यपि वा न मनागप्यनुमातुं पार्यते.

(ग) पुस्तके तु "दर्वीकरा" इत्युपक्रान्तः सप्तमे श्लोक पदे खञ्जितः, अथ "मण्डलीनां तु" इत्यादिः पु. ९४ नवमाध्यायारंभभागः, सङ्घटितः, ९९ पुटे "पीतनेत्रस्य—वेदनाः" इत्यन्तं प्रसारितः निकृत्तः। तदुपरि अष्टमाध्यायगतनस्यप्रकरणस्थ (पु. ८९) "द्रोणान्विता ... विषापहम्" इत्यादिकमारभ्य ९० पुटस्थ "सवत्साश्वारि ... विषापहम्" इत्यन्तग्रन्थः संयोजितः। तदुपरिष्टाच्च नवमाध्यायान्तर्गत (१०१) पुटस्थ "महिषीशकृत् .. ..लोपनाहयेत्" इत्यादिकमारभ्य अवशिष्टस्समग्रो नवमाध्यायग्रन्थः पूरितः "इति नवमोध्यायः" इति च निगमितः। इतश्च (ग) कोशाव-

ष्टम्भेनापि अष्टमाध्यायस्य अवधौ गुलिकानिरूपणादुपरि कीदृक् कियान्वावशिष्यते ग्रन्थभागः इत्यपि न• दृष्टिमुन्मीलयितुं शक्नुमः ।

इत्थं अध्यायद्वयग्रन्थस्य मिथोऽन्तःप्रविष्टतया कोशत्रये प्याक्षपोद्धापादीनामपर्यन्तता अभिमुखनिहितमुकुरद्वयमध्यपतितवस्तुनः प्रतिबिम्बधारामुपगूहते ।

निष्पन्ने चैवमपि वस्तुनः सतत्वे अष्टमाध्यायस्य अनुक्रमः अवसानं वा उपलब्धसमग्रसंहिताग्रन्थस्य सूक्ष्मसमीक्षया वक्ष्यमाणदिशा समाधातुं पार्यते । अस्याध्यायस्यारम्भे पञ्चाशीतितमे (८५) पुटे "तत्रौषधं प्रवक्ष्यामि येन सम्पद्यते सुखम् । नस्याञ्जनादिलेपैश्च पानभक्ष्यादिना ततः ।" इति निगमय्य "पाटली बिल्वमूलं" इत्यादि औषधं निरूपितं । नस्यादिगुलिकान्तान्यौषधानि षडेव दृश्यन्ते । तेषु आदितः पञ्चानां नामानि प्रतिज्ञावाक्य एव गृहीतानि. षष्ठस्तु गुलिकाविधिः "भक्ष्यादिना" इत्यत्र आदिशब्देन सं गृह्यते । यथा--अस्मिन्नष्टमेऽध्याये प्रतिज्ञानुसारेण दर्वीकर-चिकित्सा समुपक्रान्ता । तदनुगुणतया नस्याञ्जनलेपनादि गुलिकानिरूपणपर्यन्तः चिकित्साविधिः ऐकान्त्येन दर्वीकरचिकित्सामेव समाख्याति । प्रदर्शितग्रन्थापेक्षया दर्वीकरविषचिकित्सा प्रतिपादकः श्लोकः श्लोकभागो वा न लेशतः कश्चिदुपलभ्यते पुस्तकत्रये-

ऽपि । (ग) कोशे नवमाध्यायग्रन्थमध्ये प्रक्षिप्तः अष्टमाध्यायग्रन्थलेशः नैकान्ततया दर्वीकरचिकित्सामाख्याति ; नापि वा मण्डलिचिकित्सामाजिघ्रति. अतः "दर्वीकरा मण्डलिनः" इत्यादिः गुलिकानिरूपणान्तः ग्रन्थसन्दर्भः अष्टमाध्यायस्थ एव, गुलिकानिरूपणान्त एव अध्यायपरिसमाप्तिरभ्युपगम्येति निश्चप्रचं वचः.

## नवमोऽध्यायः

अयमध्यायः आमूलचूडं मण्डलिचिकित्सामेव प्रतिपादयति. (क) (ख) कोशयोः ग्रन्थस्य आनुपूर्वी अविपर्यस्ता दृश्यते (ग) कोशे तु अष्टमाध्यायविचारावसरोक्तदिशा तिलतण्डुलसंश्लेषवत् अष्टमाध्यायग्रन्थेन साकं संयोज्य विकारं प्रापितोऽपि ग्रन्थः अन्ते नवमाध्यायग्रन्थेनैव परिसमाप्तिदर्शनात् क. ख. कोशावधारितपाठक्रममनुसृत्य अयमध्यायः समीकृतः । अन्तरा दृश्यमाना स्खलितधारा दुरुद्धरा भवति. तथापि मण्डलिभेदनिरूपणमधिकृत्य वक्तव्यं किञ्चित् नातिविस्तरमावेद्यते—

यथा—अयमध्यायः ९५ तमे पुटे प्रारभ्यते । आदितः पङ्क्तित्रयेण मण्डलिविषवेगः सामान्यतो निरूपितः । अथ श्लोकार्धेन "घोणसानां जिकित्साथ व्यस्ताव्यस्ता च कथ्यते." इति घोणसशब्दित सर्पाणां चिकित्सा प्रतिज्ञाता। पश्चात् तद्भेदेषु दशानां नाम्नां निर्देश एकेन श्लोकेन अभिहितः दशेति संख्यया निगमितश्च । अन-

पदं "तदङ्गमण्डलीषट्कमेवंषोडश कीर्तितम्" इति अवान्तर भेदषट्कं नाम्ना अनभिधाय सम्भूय भेदाष्षोडशेति. सङ्ख्या प्रत्यज्ञायत। प्रधानदशके प्रातिस्विकशः न शक्यते नाम्ना विवेक स्साधयितुम्। अशुद्धिर्दुस्साधास्ति। शब्दानुशासनमपि तत्र न प्रभवति संस्कर्तुं। भेदोदाहरणप्रदेशे एकद्वैरक्षरैरेकं निर्दिश्य तद्विषवेगं विविच्य तदनुशामिका चिकित्सा निरूपितास्ति। तादृशनिर्देशास्तु षोडश भवन्ति।

(पु. ९५) "तत्रौषधं प्रवक्ष्यामि" इत्युपक्रम्य सप्तभिः अर्धैः कापि चिकित्सा निरूपितास्ति। ततः परं "श्वेतमण्डलिनो गात्र" इत्यादिना उद्दिष्टक्रमेण प्रधानभेदानां विषवेगचिकित्साविधिः कथ्यते। या पुनः भेदोदाहरणात्प्राक् (पु. ९५) नवनीतं इत्यादिना निदर्शिता चिकित्सा सा नाम षोडशानां भेदानां साधारणीत्येव अभ्युपगमनीयम्। ९६ षण्णवतितमपुटे "श्वेतमण्डलिनः" इत्युपक्रम्य निरूपितात् भेद चिकित्सोदाहरणात् भेदनामान्यमूनि समुपलभ्यन्ते—

| | | |
|---|---|---|
| १ श्वेतमण्डलिनः | २, कुष्ठमण्डलिनः | २ कुटिलास्यस्य |
| ४ महामण्डलिनः | ५ भूममण्डलिनः | ६ महामण्डलिनः |
| ७ तीक्ष्णघोणसस्य | ८ कृष्णस्य | ९ पिशाचस्य |
| १० हेममण्डलिनः | ११ विसर्पस्य | २ पीतनेत्रस्य |
| १३ रोममण्डलिनः | १४ कुम्भमण्डलिनः | १५ असृङ्मण्डलिनः |
| | | १६ शोफमण्डलिनः |

एवं षोडशनामान्युपलभ्यन्ते. एषु प्रतिज्ञाश्लोकोक्तनामाक्षरसाम्येन, अष्टानां अभिधानाक्षराणि सुग्रहाणि भवन्ति । प्रतिज्ञावाक्ये भूमसूचिरिति सूचिशब्दान्तः भूमशब्दः, उदाहरणे भूम इत्येवमेकदेशग्रहणेन उपात्तः, एतदनुरोधेन श्वेतकुष्ठेति प्रतिज्ञाश्लोकस्य पूर्वार्धे श्वेतकुष्ठमहानामभूमानां चतुर्णामेव नामानि, उत्तरार्धे हेम रोम असृक् शोफानां चतुर्णामिति अष्टानामेव नामान्युद्ध्रियन्ते । प्रतिज्ञाश्लोकोत्तरार्धे दशेति सङ्ख्याव्यवच्छेदान्यथानुपपत्त्या " रङ्गमण्डलिते " इत्येतद्वर्णसमुदायं नपुंसकद्विवचनान्तं पदद्वयमित्यवधार्य रङ्गेति मण्डलितेति अभिधानद्वयं स्वीकार्यमेव । उदाहरणे नेमान्यक्षराणि, अपित्वन्यान्येव । भेदनिर्देशपरिपाट्यां महामण्डलिनः इति द्विष्कृत्वः कृतः समानवर्णनिर्देशः नाम्रेडितो भवति । तयोः विषवेगचिकित्सयोः पार्थक्येन निरूपणात् । (ग) कोशे तु पूर्वाध्यायसंवलनेन विपर्यासितोपि प्रबन्धः (क) (ख) कोशानुसारेण समगूशरीरस्संपादितः । इयानपरो विशेषः— यत् ९९ पुटे " पीतनेत्रस्य——वेदनाः " इत्यस्मादनन्तरं १०१ पुटे— " महिषीशकृत् " इत्यतः प्राक् गलिताः सार्धाः २३॥ श्लोकाः (क) (ख) कोशाभ्यामुद्धृत्य स्थाने समायोज्यन्त ।

### दशमकादशद्वादशास्त्रयोध्यायाः

एते निरुपद्रुतशरीराः कोशत्रयेऽपि समानानुपूर्वीकाः समग्रतया वर्तन्ते ।

त्रयोदश.

अयमध्यायः संहितानिगमनरूपः (क) (ख) कोशयोर्नास्ति । (ग) कोश एकस्मिन्नेव दृश्यते। इमं विना संहितायास्समग्रता न भवति। अध्यायान्ते त्रुटिचिह्नमस्ति । अस्य तु एकमातृकतया यथादर्शं समग्रा-संहिता मद्वर्णेन साधिता ।



श्रीः

## संहिताप्रतिपाद्योऽर्थः

---

अस्यां संहितायां साङ्गसप्रयोगोपसंहारः पञ्चाक्षर्यादिर्गारुडमन्त्र-कल्पः मुख्यः प्रतिपाद्योऽर्थः। अस्य तु फलं द्वेधा—आमुष्मिकमैहिकं चेति— आद्यं तु देवतासाक्षात्कारतदेकान्तिकतादिना तत्सायुज्यलाभः। अन्त्यं तु इह लोके उपासनोपयोगिशरीरप्रतिघातकनिवारणम्। इद तु मन्त्रेण तदुपबृंहितशक्तिना औषधादिना च भवति। अधिकृता देवता अहिकुलोन्माथिनी अमृतदायिनी च। तदावर्जकाश्च मन्त्राः तदभिमन्त्रितान्यौषधादीनिच विषसंहाराय अमृतीकरणाय च भवन्ति। मनोवाक्कायरूपकरणत्रये यथावकाशं मन्त्रौषधादीनां विनियोगः सप्रपञ्चः संहितायां शृङ्गग्राहिकया अभिहितोऽर्थ इति ।

## परिशिष्टम् १

इयं संहिता पाञ्चरात्रशब्दितेषु वैष्णवसंहिताग्रन्थेषु अन्यतमा आहोस्वित् अन्या; इतीयं मीमांसा प्राप्तावसरा भवति। पाद्मादिषु कतिपयेषु संहिताभेदेषु संहितानामनिर्देशस्थले काश्यपसंहितेत्यपि नाम दृश्यते। वैष्णवो गरुडमन्त्रकल्पश्च प्रस्तुतायां दृश्यते, तेन सेयं संहिता वैष्णवागमान्तर्भूतेति प्रतिपत्तिर्न्यायानुगृहीता सहेतुका च भवति। नारायणीयेति नाम्ना लघुशरीरा अस्याः संहिताया एकदेशं विवृण्वाना विवृतिरपि काचिदुपलब्धास्ति। इसापि मुद्रिता परिशिष्टानुबन्धतया संपुटिता.

**अयमत्रसङ्ग्रहः**

प्रणतेन तु गौतमेन पृष्टः श्रुतपूर्वागममन्त्रमण्डलेन।
गरुडप्रियमन्त्रबृन्दकल्पं कृपयाचष्ट स काश्यपो महर्षिः ॥ १

गरुडप्रियपञ्चवर्णमन्त्रागमयन्त्रादिविधानमुन्नयन्ती।
विपुलां विषमर्दिनीं चिकित्सां विविधां काश्यपसंहिताभिधत्ते ॥ २

स्खलितानि बहूनि संहिताया ननु सन्ति त्रितयेऽपि मातृकाणाम्।
अवलम्ब्य तदेव लोकभद्रङ्करणी काश्यपसंहिता न्यमुद्रि ॥ ३
कस्य वा क्वचन वास्ति संहितामातृका यदि वशे महात्मनः।
प्रेषयेद्यदि विशोध्य तां पुनर्मुद्रणाय मुदिता यतेमहि ॥ ४

अचिरान्निजमन्त्रकल्पकोशं परिशुद्धं स्वयमेव सन्निधाप्य ।
विनतां जगतीं च वैनतेयः स दयेतेत्यवधार्य निर्वृतास्स्मः ॥ ५

इतीयं निवेदना

प्रकाशकयोः

| | |
|---|---|
| शकाङ्कः—१८३५<br>आङ्गीरसशरदि मार्गशीर्षमासे.<br>धनुषि—१०.<br>(१९३२.) | म. चक्रवर्ति-तिरुमलाचार्य<br>आंसूरि. श्री निवासस्वामिनोः. |

# काश्यपसंहितायाः विषयानुक्रमणिका.

ऋष्यादिमुद्राबीजपिण्डसंज्ञापदादि यन्त्रविधिः

अध्यायसमाप्तिः

## सप्तमाध्यायः

(पूर्वाध्यायोदितसर्पक्रीडाविधिशेषः)



## अष्टमाध्यायः

दर्वीकरचिकित्सा.

## नवमाध्यायः

### मण्डलि चिकित्साविधिः

दशमाध्यायः



एकादशाध्यायः

| पुटं | पङ्क्तिः | |
|---|---|---|
| १२६ | ८ | विषघातिनः |
| २१६ | १२ | भयानकस्य |
| ११७ | २ | करघ्नस्य |
| ,, | ६ | क्रूरस्य |
| ,, | ९ | उग्रस्य |
| ,, | १४ | भूतकस्य |
| ११८ | ३ | तीक्ष्णस्य |
| ,, | ८ | मेघनादस्य |
| ,, | १२ | कुमुदस्य |
| ११९ | १ | सिंहास्यस्य |
| ,, | ५ | एकचारिणः |
| ,, | १० | सुनासस्य |
| ,, | १३ | सुदन्तस्य |
| ,, | ३ | सुलभस्य |
| ,, | ७ | सुगर्भस्य |
| १२० | १२ | इतः परं सामान्यचिकित्सा. |
| १२४ | १४ | एतदारभ्य शृङ्खलादि मन्त्रविशेषाः, औषधानि च, |
| १२८ | १२ | अध्यायसमाप्तिः |

## द्वादशाध्यायः

### विंशतिविधनानाविषचिकित्सा

## त्रयोदशाध्यायः

### यन्त्राभिषेकतद्धारणविधिः

# स्खलितशोधनम्

| पुटं | पङ्क्तिः | शुद्धपाठः |
|---|---|---|
| ४ | १ | वह्निमाया. |
| ११ | २ | शोकमोचनाय. |
| ,, | ३ | नाशय, भगधर्दंष्ट्रि. |
| १२ | ५ | शङ्खपाल. |
| १९ | ६ | क्षाणींङ्कुशपाशाभ्याम्. |
| ,, | ८ | षोडशार्णमनुस्स्मृतः. |
| २० | ५ | तद्वाह्यवृत्त. |
| २२ | ११ | पुष्पाञ्जलिरतः परम्. |
| २८ | ६ | विलिखेन्मन्त्रपञ्चकम्. |
| ३४ | ५ | महाब्जेन. |
| | ११ | विद्रावलिप्तेच. |
| ३९ | १५ | गद्गदकण्ठ. |
| ४० | १५ | अनन्तगुलिकौ. |
| ४७ | १ | 'मन्त्राः' इत्यादिनारभ्य ६२ तमपुटान्ता- |
| ,, | ,, | वधिर्ग्रन्थःव्याख्यानरूपः |
| | | प्रमादादत्रमुद्रितः. |
| ५४ | ५ | त्रयं प्रोक्तमिति. |
| ५९ | ७ | अहिमग्नौ दग्धं. |
| ,, | ११ | सूकरेणाहिं खादितं. |

| पुटं | पङ्क्तिः | |
|---|---|---|
| ६४ | ४ | ग्रहगणस्तोभे. |
| ,, | ६ | सुधाकरौ. |
| ,, | ७ | हस्ततले. |
| ,, | १० | षोडशायुध. |
| ६५ | ५ | 'सम्मुखालिखित' इतिपद्यं |
| ,, | ,, | 'अभिमुखलिखितानां' इतिपद्या |
| ,, | ,, | दनन्तरं कचित् दृश्यते. |
| ,, | ९ | लिखितानां मध्यनारीनराणां इति पाठान्तरं |
| ,, | १३ | 'क्रूरत्रयं' इतिपाठान्तरं. |
| ६६ | ३ | क्षकारोपरि |
| ७७ | १५ | साधकः. |
| ८३ | १ | मीरितम्. |
| ,, | १५ | मन्त्रितान्. |
| ,, | १६ | निर्विषोंभः. |
| ८५ | १ | राजिलावैतका. |
| ८६ | ३ | ईश्वरीकदली. |
| ८७ | ९ | नस्याञ्जनादिक्रियया. |
| ,, | १५ | शाकलेपेन—वक्त्र |
| ८८ | १२ | ❀इति नस्यप्रकरणम्. |
| ,, | १५ | त्रिकटुकं—रंभांबु. |
| ९१ | १ | विळंगं. |
| ,, | ३ | विषहरी. |
| ९२ | २ | लशुनं. |
| ,, | ७ | सशुंठी...लशुन. |

| पुटं | पङ्क्तिः | |
|---|---|---|
| ९३ | ७ | बृहत्पिप्पलिका. |
| ९५ | ७ | षट्कं. |
| ९७ | ३ | जंबूत्वक्. |
| ,, | ९ | सिरां स्फुटा ? |
| ९८ | ३ | क्षते शुष्कैः. |
| ९९ | ५ | पीतनेत्रस्य. |
| ,, | १५ | खार्या छिमातुल. |
| १०० | ४ | तृष्णाति वेदना. |
| ,, | ५ | ज्वरश्शिरोरुजा. |
| ,, | ६ | दाहेच्छा. |
| १०१ | ५ | श्वयथू रुजा. |
| ,, | [illegible] | पारवश्यं. |
| १०४ | १६ | दोर्वल्ली. |
| १०५ | ६ | हिङ्गु. |
| ,, | ,, | पुटस्योपरि “ नवमोध्यायः ”. |
| १०७ | | ,, ,, |
| ११५ | | पञ्चाक्षरीकल्पे राजलि चिकित्सा नाम |
| ११६ | ९ | हृत्पीडा तिक्तता. |
| १२१ | १ | क्षीरणाखु. |
| १२४ | ११ | मूत्रे पीतं. |
| १२५ | ४ | विश्वामित्रपदं. |
| १२७ | १२ | अष्टादशविध. |
| १३३ | ७ | ध्यात्वा दष्टं. |
| १३५ | १५ | गौरी. |
| १३६ | १४ | तथैव. |
| १३७ | १ | हरेणु. |
| १३९ | ४ | मन्त्रश्च. |

# नारायणीये तृतीयपटले

| पुटं | पङ्क्तिः | |
|---|---|---|
| ११ | ५ | नेत्रादीन्यङ्गानि विपतेश्च षट्. |
| ,, | ७ | बिन्द्वौम· |
| ,, | ९ | न्यसेद्वर्णान्विपतेर्गदिता ज्झलः । |
| १२ | ४ | हन्याद्विषद्वयम् । |
| १३ | ४ | सन्दह. |
| ,, | १२ | घोषस्सर्गी चतुर्ष्वेषु. |
| १४ | ९ | तनुमध्यं—शङ्खादिको. |
| १५ | १ | भृगुस्साषाढि दीर्घाग्नि |
| | | दण्डी स्त्रां स्तोभकारणम् |
| ,, | ३ | इन्द्र शत्रु गतं नाम. |
| ,, | ५ | गेहाभ्यामेतन्मांसाङ्ग. |
| ,, | ६ | पाक्षिवाहिवृतं. |
| ,, | १२ | दण्डी— |
| ,, | ,, | वर्गीशो बिन्दुमान्मूर्ध्नि ध्वस्त ' इति पाठः. |
| ,, | १४ | जान्तं दण्डीन्दुपुटितं सुधा. |
| | | स्त्राविजलार्पितम् |
| ,, | १३ | मुखवृत्तान्वितं दण्डिव्याम. |
| १६ | ६ | अम्भः कपि. |
| ,, | ९ | ऐन्द्रस्थाप्यगृहस्थस्य. |
| ,, | १३ | त्येवं दष्टो नष्टविषे वदेत्. |

श्रीरस्तु

श्रीहयग्रीवायनमः

# काश्यपसंहिता

## प्रथमोऽध्यायः

काश्यपं तं महात्मानमादित्यसमतेजसम् ।
अभिवाद्याभिसङ्गम्य गौतमः पर्यपृच्छत ॥ १

गौतमः —

त्वं हि वेदविदां श्रेष्ठो ज्ञानानां परमो निधिः ।
प्रजापतेरात्मभवो भूतभव्यविदुत्तमः ॥ २

त्वत्तो नास्त्यधिकः कश्चिदन्यो वेत्ता हितं प्रभो ।
तारंतारानुतारं च मन्त्रमष्टाक्षरं परम्[1] ॥ ३

द्वादशार्णं षडर्णं च स्तोत्रमन्त्रमतः परम् ।
व्यूहमन्त्रचतुष्कं च व्यूहान्तरमतः परम्[2] ॥ ४

---

1. (क) पदं. 2. (क) मंत्रं तथैव च.

ततो [1]विभवमन्त्रांश्च लक्ष्मीमन्त्रगणं तथा ।
पञ्चायुधमनुं चैव विष्वक्सेनम[2]नुं तथा ॥ ५
श्रितमन्त्रमनन्तस्य प्रसादादवधारितम् ।
श्रीमद्गरुडपञ्चार्णं श्रोतुमिच्छामि वैभवम् ॥ ६
यद्यनुग्रहपात्रं मां मन्यसे गतकिल्बिषम् ।
तवैव शिरसा पादौ नतोऽस्मि कमलारुणौ ॥ ७

काश्यपः—

साधु साधु त्वया पृष्टं जगतां हितकाम्यया ॥ ७॥
श्रीमद्गरुडपञ्चार्णं माहात्म्यं तदनन्तरम् ।
ऋष्यादिमुद्रां मन्त्रस्य ध्यानं सर्वार्थसाधकम् ॥ ८॥
पूर्वं सेवाविधिं चैवाभ्यर्चनं तदनन्तरम् ।
नानायन्त्रविधानं च शक्त्यादिकमतः परम् ॥ ९॥
प्रवक्ष्यामि श्रुतं पूर्वं महादेवेन भाषितम् ।
शृणु सर्वं मुनिश्रेष्ठ सावधानेन चेतसा ॥ १०॥

---

1. (क) विहग. 2. (क) मतः परम्.

निर्विकल्पसमाधानचेतसो योगिनस्सदा ।
अन्तः[1] पश्यन्ति यज्ज्योतिस्तन्नमामि सदाशिवम् ॥११॥

पुरा कैलासशिखरे हराराधनतत्परः ।
धरस्सर्वात्मना तत्र तप्यते सुचिरं तपः ॥ १२॥

प्रसन्नस्तपसा तस्य पुरस्ताद्वृषभध्वजः ।
प्रणतार्तिहरश्शम्भुराविरासीदुमासखः ॥ १३॥

तं दृष्ट्वा देवदेवेशं धरस्सुरवरार्चितम् ।
[2]प्रणिपत्य यथान्यायं पृष्टवानि[3]दमेव हि ॥ १४॥

प्रसन्नः शुभया वाचा यदवोचदुमापतिः ।
[4]तदहं सम्प्रवक्ष्यामि शृणु गौतम सुव्रत ॥ १५॥

वर्णान्तं मायया युक्तं प्रथमं वर्णमुच्यते ।
पवर्गप्रथमायुक्तं द्वितीयं वर्णमुच्यते ॥ १६॥

त्रयोदशं बिन्दुयुतं तृतीयं वर्णमुच्यते ।
वह्निजायां ततश्चोक्त्वा पञ्चार्णं मन्त्रमुद्धरेत् ॥ १७॥

---

1. (के) निर्विकल्पं परं ज्योतिश्चितस्वो. 2. (ग) तं प्रणम्य.
3. (ग) मिदमब्रवीत. 4. (क) तदशेषं प्रवक्ष्यामि.

वर्णान्तं मेन्दरेयुतं वह्नि[1]जायासबिन्दुकम् ।
एवं गरुडमन्त्रोऽयं सर्वकर्मसुखावहः ॥ १८॥

दृष्टप्रयोगबहुलं दृष्टादृष्टार्थ[2]साधकम् ।
आकरं सर्वसिद्धीनां दिव्यं परमगारुडम् ॥ १९॥

आयुरारोग्यविजयधनधान्य[3]समृद्धिदम् ।
पुत्रदं वाक्प्रदं नृणां सर्वसौभाग्यवर्धनम् ॥ २०॥

राजवश्यं [4]लोकवश्यं स्त्रीपुंवश्यं तथैव च ।
सर्वरक्षाकरं मन्त्रं सर्वशत्रु[5]निबर्हणम् ॥ २१॥

[6]द्वन्द्वतारानुतारं च महामायां रमामपि ।
कामराजं च तस्यान्ते [7]लक्ष्मीं बीजचतुष्टयम् ॥ २२॥

मन्त्रादौ योजयेन्मन्त्री सर्वसिद्धिकरं परम् ।
युद्धे तु विजयं राजा प्राप्नुयाद्युद्ध[8]दुर्मदः ॥ २३॥

सर्वव्याधिप्रशमनं सर्वमङ्गलमङ्गलम् ।
सप्तक्षुद्रकरं [9]मन्त्रं सप्तक्षुद्रहरं [10]तथा ॥ २४॥

---

1. (ग) मद्न. 2. (ग) साधनम्. 3. (ग) विवर्धनम्. 4. (क) जगद्वश्यम्. 5. (ख) विमर्दनम्. 6. (क) द्वन्द्वं तारानु. 7. (ख) क्ष्मीं तु. 8. (ग) मर्दनः. 9. (क) चैव. 10. (ग) परम्.

कृत्याशून्यकरं चैव कृत्याशून्यहरं परम् ।
शान्तिकं पौष्टिकं चैवाप्यष्टैश्वर्यकरं परम् ॥ २५॥

बहुनाऽत्र किमुक्तेन चतुर्वर्गफलप्रदम् ।
स्थावरं जङ्गमं चैव कृत्रिमं सहजं तथा ॥ २६॥

शङ्काविषमिति प्रोक्तं हालाहलविषं तथा ।
यथा सूर्यस्तमो हन्याद्गरुडोऽपि तथा विषम् ॥ २७॥

ऋषिर्दक्षोऽस्य मन्त्रस्य रुद्रश्चेति विकल्पितः ।
पङ्क्तिर्गायत्रमित्युक्तं छन्दसीति विदुर्बुधाः॥ २८॥

लक्ष्मीलक्ष्मीशसहितो गरुडो देवता स्मृता ।
मन्त्रादिवर्णो बीजं स्यात् स्वाहाशक्तिरिति स्मृता २९

आद्यन्तप्रणवोपेतान् मन्त्रवर्णान् न्यसेत् क्रमात्॥३०

अङ्गुष्ठादि कनिष्ठान्तं करयोरुभयोरपि ।
करन्यासं ततः कुर्यान्मन्त्रेणानेन मन्त्रवित् ॥ ३१

1. (ग) मन्त्रं. 2. (ग) सर्वशून्यहरम्. 3. (क) चैव श्वर्य. 4. (क) किमिहोक्तेन. 5. (ग) शंकाविषमतः परम्. 6. (ग) कृत्रिमं ग्रहयोगं च. 7. (क) मयापि वा. 8. (ग) स्मृतः. 9. (क) रितीरिता. 10. (क) आद्यन्तं प्रणवोपेतम्.

मूर्धास्यहृदये नाभौ पादयोरक्षरं न्यसेत् ।
नाभिपादशिरोवक्त्रहृदयेषु स्थितिं न्यसेत् ॥ ३२

पादादिमूर्धपर्यन्तं संहारन्यासलक्षणम् ।
अङ्ग[1]मन्त्रमथो वक्ष्ये सर्वरक्षाकरं परम् ॥ ३३

ज्वलज्वलपदं चोक्त्वा तस्योपरि महामते ।
स्वाहान्तं जातिसंयुक्तं हृ[2]न्मन्त्रं हृदये न्यसेत् ॥ ३४

ततो गरुडशब्दान्ते चू[3]डामणिपदं वदेत् ।
स्वायुक्तं स्वाहया युक्तं शिरोमन्त्रमिति स्मृतम् ॥ ३५

[4]ततो गरुडशब्दान्ते शिखायै वह्निजायया ।
शिखायै वौषडित्येवं शिखामन्त्रमिति स्मृतम् ॥ ३६

ततो गरुडशब्दान्ते प्रभञ्जनयुगं वदेत् ।
[5]प्रभञ्जनयुगस्यान्ते मर्दनाथ विमर्दनम् ॥

मूर्धादिकवचं मन्त्रं नाभ्यन्तं कवचं न्यसेत् ॥ ३७॥

---

1. अङ्गमंत्रं तथा (क). 2. (ग) हुं मंत्रम्. 3. (क) चूडा-मंत्रं. 4. (क) (ख) इदमर्धं नास्ति. 5. प्रभेदन (ग).

उग्ररूपपदस्यान्ते [1]धारकेति पदं वदेत् ।
सर्वसर्पपदं चोक्त्वा भयङ्करपदं वदेत् ॥ ३८॥

भीषयद्वयमुच्चार्य सर्प दह पदद्वयम् ।
भस्मीकुरु युगं पश्चाद् वह्निजायान्तमुच्चरेत् ॥ ३९॥
नेत्र[2]मन्त्र[3]मिति प्रोक्तं नेत्रत्रयसमन्वितम् ॥ ४०
अप्रतिहतपदं चोक्त्वा शासनान्ते च वर्म फट् ।

स्वाहान्तं मन्त्रमुच्चार्य तर्जन्यङ्गुष्ठयोर्न्यसेत् ॥ ४१
अस्त्रमन्त्रमि[4]दं प्रोक्तं पार्श्वयोरुभयोर्न्यसेत् ॥ ४१॥

नमस्सुदर्शनायेति स्वाहा चास्त्राय फट् बुधः ।
दिग्बन्धनमनेनैव कारयेन्मन्त्रवित्तमः ॥ ४२॥

तत्पुरुषायशब्दान्ते विद्महेति पदं वदेत् ।
सुपर्णपक्षपदस्यान्ते आयशब्दं प्रयोजयेत् ॥ ४३॥

धीमहीति [5]पदं पश्चात् तन्नो गरुडः प्रचोदयात् ।
एषा गायत्रिरुद्दिष्टा चक्रमुद्रां [6]प्रदर्शयेत् ॥ ४४॥

---

1. (क) धीराक्षितिपदम्. 2. (ग) नेत्रमन्त्रं मम. 3. (ग) नेत्रद्वय. 4. (ग) मिति 5. (क) वदेत्पश्चात् 6. (ख) प्रयोजयेत्.

पश्चात् सन्निधिमुद्रां च[1] मन्त्रेणानेन कारयेत् ॥ ४५

ॐ नमः पक्षिराजाय वेदपक्षयुग प्रभो ।

वैनतेय नमस्तेऽस्तु गरुडाय नमो नमः ॥

अनेनाञ्जलिमुद्रां च दर्शयेन्मन्त्रवित्तमः ॥ ४६॥

प्रणवादियुतान् सर्वानाचरेत् सुसमाहितः ॥ ४७

बीजं पिण्डं च संज्ञां च पदं चेति चतुर्विधम् ।

खान्तं[2] विष्णुसमायुक्तं चन्द्रखण्डेन भूषितम् ॥ ४८

आद्यन्तं प्रणवोपेतं गरुडैकाक्षरं परम् ॥ ४८॥

।ऽस्य मन्त्रस्य पङ्क्तिर्विष्टर एव च ।

देवता[3] च सुपर्णोस्य बीजं शक्तिस्स्वयं भवेत् ॥ ४९॥

स्वयमेवाङ्गुलिकरं देहव्यापकमेव च ।

दीर्घाद्यङ्गं[4] ततश्शेषं पूर्ववद्वाञ्छितप्रदम् ॥ ५०॥

पिण्डमन्त्रं प्रवक्ष्यामि सर्वेषां हितं[5]कारकम् ॥ ५१

विष्णोः पदं वह्नियुतं मायाखण्डेन्दुभूषितम् ।

---

1. (ख). ताम् 2. (ग). कान्तम् 3. (ग). देवताग्नि सुपर्णश्च 4. (ख). दीर्घाद्यागगतश्शेषम् 5. (क). कारणम्

अशेषजगतः पिण्डं महामायेति विश्रुतम् ॥ ५२
ऋषिर्ब्रह्मास्य मन्त्रस्य च्छन्दो गायत्रमुच्यते ।
सुपर्णो देवता प्रोक्तो हकारं बीजमुच्यते ॥ ५३
अस्य शक्तिर्महामाया ह्यङ्गुल्यादिः स्वयं भवेत् ।
दीर्घाद्यङ्गं ततश्शेषं पूर्ववत्सर्वमाचरेत् ॥ ५४
वैनतेयाय शब्दान्ते नमः प्रणवपूर्वकम् ।
ऋषिरस्य पुलस्त्यस्तु पङ्क्तिश्च्छन्द उदाहृतम् ॥ ५५
गरुडो देवता प्रोक्तो वकारो बीजमुच्यते ।
नमश्शक्तिरिति प्रोक्ता पञ्चाङ्गं स्वयमेव च ॥ ५६
तच्छेषं पूर्ववत्कृत्वा दशाक्षरमिहोच्यते ।
ॐम् नमः पक्षिराजाय वह्निजायान्तमुच्चरेत् ॥ ५७
ऋषिर्दक्षोऽस्य मन्त्रस्य विराट्च्छन्द उदाहृतम् ।
गरुडो देवता प्रोक्तो प्रणवं बीजमुच्यते ॥ ५८
स्वाहा शक्तिरिति प्रोक्ता पञ्चाङ्गं स्वयमेव च ।
शेषं पूर्ववदित्युक्तं पदमन्त्रं भवेत् स्वयम् ॥ ५९

---

1. (ग) मायामायेति· 2. सुपर्ण गरुडाद्युद्देश्य शब्दानुरोधेन प्रोक्तशब्दस्य पुल्लिङ्गता कश्चित्कोशे· देवतादि विधेयशब्दानुसारेण स्त्रीलिङ्गता कोशान्तरे दृश्यते. 3. (क) मुच्यते· 4. (क) दीर्घाङ्ग विधीयते·

2

वर्णान्तं मादनयुतं वह्निजायासबिन्दुकम् ।
कूटगारुडमित्युक्तं सर्वसिद्धिकरं परम् ॥ ६०
ऋषिर्वैश्रवण[2]श्छन्दो विराट् स्यात् गरुडस्स्मृतः ।
देवता प्रणवं भीजं स्वाहा शक्तिरितीरिता ॥ ६१
दीर्घाद्यङ्गं ततस्सर्वं पूर्ववत् सुसमाचरेत् ॥ ६१॥
पदमन्त्रस्य वक्ष्यामि विधिं गौतम सुव्रत ।
दक्षिणामूर्तिरित्युक्त ऋषिरस्य विधीयते ॥ ६२॥
छन्दोऽस्य जगती प्रोक्ता महाताक्ष्र्योऽस्य देवता ।
प्रणवं बीजमित्याहुः नमश्शक्तिरिति स्मृता ॥ ६३॥
शेषं पूर्ववदित्युक्त मन्त्रपाठ इहोच्यते ॥ ६४

[3]ॐम् क्षीम् ॐम् नमो भगवते अष्टकुलनागभूषणाय वैनतेयाय नागशोणितदि[4]ग्धाङ्गाय सुपर्णाय सर्वलोकर[5]क्षणोन्मुखाय सर्वभूतभयङ्कराय सर्वाण्डान्तरवासिने [6]दशोत्तरावरणातीताय गुणातीताय सर्वगताय [7]सर्वेश्वराय पक्षिराजाय भगवद्वाहनाय [8]गरुडाय सर्वाण्डान्तरक्षोभनाशाय

1. (क ख) मर्दन. 2. (क ख) णो ह्युक्तो विराट्च्छन्द उदाहृतम् । शेषं पूर्ववदित्युक्तं दीर्घाद्यङ्गं विधीयते. 3. (क) ॐमित्याद्यक्षरत्रयं नास्ति. 4. (क) दिग्धाय. 5. (क) रक्षकाय सुमुखाय. 6. (क) दिशोत्तरणातीताय. 7. (क) सर्वेश्वरपक्षिराजाय. 8. (ख) गरुडरूपाय.

ब्रह्मादिचतुरक्षरानुस्वाराय [1]युगान्तरबीजाय मातुरर्थे शोकमोचनाय अमृताहरणदक्षाय [2]हन हन दह दह मम शत्रून् नाशाय [3]गवदङ्घ्रिकिरणाङ्कितशरीराय सर्वतेजोमयाय सुमुखाय [4]सुप्रतिष्ठिताय सर्वगताय सर्वनागभक्षणप्रियाय भगवदङ्गरक्षणाय [5]ध्वजे प्रतिष्ठिताय गरलनाशनाय [6] [7]सर्वविघ्नविनाशाय वैनतेयाय स्वाहाः—६५

[8]नागाकृष्टिमनोरस्य ऋषी रुद्रः प्रकीर्तितः ।

छन्दो महाविराडासीत् [9]देवता गरुडस्स्मृतः ॥ ६६

[10]प्रणवं बीजमित्युक्तं हुं फट् शक्तिरिहोच्यते । ६६॥

१० [11]ॐम् क्ष्म्यूम् ज्म्यूम् ह्म्यूम् ॐम् नमो भगवते बाष्पनादाय वज्रनखाय वामपादाय इन्द्राय विनतापुत्राय सुपर्णपक्षि [12]राजपक्षि गरुडपक्षि गरुड सर्वपक्षोश्वरपक्षि वज्रपक्षि मरतकपक्षि मातङ्गपक्षि सर्वपक्षि सर्वपापहरपक्षि

---

1. (ग) युगान्तबीजाय. 2. (ग) हन मम दह मम.. 3. (क) करणा. 4 (क) सुतीक्ष्णाय. 5. (क) ध्वजप्रति. 6. (क) नाशाय. 7. (क) इदं नास्ति. 8. (ग) नागतुष्टि. 9. (क) प्रणवं बीजमुच्यते. 10. (क) हुं फट् शक्तिरिति प्रोक्ता मन्त्रो वाङ्गमिहोच्यते. 11. (क) ॐम् क्ष्म्यूम् घ्यूम् ह्यूम्. 12. (ग) राजपक्षि सर्वंजनवश्यकर पक्षि हां जनवन्द्य पेम्. क्लीम्. क्ष्मीम्. ज्रौम्. आम्. क्रोम्. प्रोम्. क्रोम्. ह्रीम्. हंसः. प्रहंसः.

सर्वशत्रुहरपक्षि सर्वजनवश्यकरपक्षि ॐम्. श्रीम्. ऐम्. क्लीम्. सौम्. क्ष्म्यूम्. ज्रौम्. आम्. क्रोम्. प्रोम्. न्मृम्. ह्लीम्. हंसः. प्रहंसः. यरलवशषसह. ॐम्. [1]यावत् गोष्ठात्मने हुम्. ह्राम्. ह्रोम्. एह्योहि अनन्त वासुकि तक्षक कार्कोटक पद्म महापद्म शङ्खपाल गुलिक, [2]अष्ट-कुलनागान् सर्वनागान् आज्ञापय आविश आकृष्ट मनुष्यंदष्टकान् [3]गुहपुरुटो [4]घुरुलु श्रीघुरुळु घुरुळु घुरुळु घोर घोर नीलकण्ठ सर्वं खिल खिल मद मद खुदि खुदि ह्रूम्. ह्राम्. ह्रीम्. ह्रूम्. क्ष्म्यूम्. हुम्. फट्. स्वाहा । ६७॥

[5]स्तुतिमन्त्रऋषिः प्रोक्तः काश्यपश्शाङ्करी स्मृता ॥ ६८

गरुडो देवता प्रोक्तो प्रणवं बीजमुच्यते ।

स्वाहा शक्तिरिति प्रोक्ता मन्त्र[6]स्याङ्गमिहोच्यते ॥ ६९

ॐम् नमो भगवते अष्टकुलनागभूषणाय अरुणकनी-यसे नागशोणितलिप्ताङ्गाय सप्तपातालवासिने [7]सर्वजन-

---

1. (ग) इत्यादि एह्योहि इत्यन्तं नास्ति. 2. (क) अष्टरुष्टनाग (रौद्रा) आविश आ कः पः 3. (ग) इदं नास्ति. 4. (ग) घुरुळु घुरुळु घोरः नीलकण्ठ सर्वमखिलः खतिः ह्राम्. 5. (क) स तु मन्त्री–स तु मन्त्रः. 6. (क) मन्त्रदाठ. 7. (क) सर्पजन.

विक्षोभकराय महामेरुसदृशवपुषे पुरुषोत्तमवाहनाय त्रिन-
तानन्दकराय त्रैलोक्यक्षोभणाय देवदानवगन्धर्वोरग-
मथनाय मातुरर्थे अमृतमादाय नागमोहनाय हन हन
विघ्नं विनाशय हुम् फट् स्वाहा ॥ ७०

इति काश्यपीये गरुडपञ्चाक्षरीकल्पे ऋष्यादिमुद्रा, बीज, पिण्ड-
संज्ञापदादिमन्त्रगणविधिः प्रथमोऽध्यायः ॥



1. सदृशाय पुरुषाय. 2. (क) कारणाय. 3. (ग) अमृतदान नागमो हनाय विघ्नविनाशाय.

# द्वितीयोध्यायः ।



अथ ध्यानं प्रवक्ष्यामि सर्वसिद्धिकरं परम् ।
माहेन्द्रमण्डलं कृत्वा पीतं वज्रविभूषितम् ॥ १
दिग्विदिङ्मध्यमं चैव नवभागं प्रकल्पयेत् ।
चिन्तयेन्मध्यमं देवं महामेरुसमप्रभम् ॥ २
आजानुतस्सुवर्णाभमाकट्यास्तु[1]हिनप्रभम् ।
कुङ्कुमारुणमाकण्ठादाकेशान्तं सितेतरम् ॥ ३
स्वस्तिकं दक्षिणं पादं वामपादं तु[2] कुञ्चितम् ।
पातालस्पर्शिपादाग्रं ब्रह्माण्डगतमौलि[3]नम् ॥ ४
नीलोग्रनासिकावक्त्रं [4]त्रियक्षं चारुकुण्डलम् ।
दंष्ट्राकरालवदनं किरीटमुकुटोज्ज्वलम् ॥ ५
[5]सर्वाभरणसंयुक्तं सर्वावयवसुन्दरम् ।
कपिलाक्षं गरुत्मन्तं सुवर्णसदृशप्रभम् ॥ ६

---

1. (क) स्तु हिम· 2. (ख) त्रिकुञ्चितम्. 3. (क) मौलिकम्. 4. (क) सुतीक्ष्णम्. 5. इदमर्धं दीर्घबाहुं इत्यर्धानन्तरं (क) कोशे दृश्यते.

दीर्घबाहुं, बृहत्स्कन्धं नागाभरणभूषितम् ।
अनन्तो वामकटको यज्ञसूत्रं तु वासुकिः ॥ ७
तक्षकः कटिसूत्रं तु हारः कार्कोट[1]कस्स्मृतः ।
पद्मो दक्षिणकर्णे तु महापद्मस्तु वामतः ॥ ८
शङ्खः शिरःप्रदेशे तु गुलिकस्तु भुजान्तरे ।
इत्येवं भूषणैर्युक्तं महापद्मस्थितं [2]प्रभुम् ॥ ९
[3]महापक्षं महासत्त्वं मन्दस्मितमुखाम्बुजम् ।
अष्टबाहुधरं देवमष्टायुध[4]विभूषितम् ॥ १०
शङ्खं चक्रं सुधाकुम्भं नागमुष्टिं गदामसिम् ।
भगवत्पादविन्यस्तकरमष्टभुजं क्रमात् ॥ ११
[5]स्वांसे निधाय लक्ष्मीशं कालमेघमिवोत्थितम् ।
चतुर्बाहुमुदाराङ्गं पुण्डरीकायतेक्षणम् ॥ १२
सर्वाभरणसञ्छन्नं शङ्खचक्रगदाधरम् ।
वरदाभयहस्तं च पीताम्बरधरं विभुम् ॥ १३
वामाङ्के संस्मरेल्लक्ष्मीं पीतवर्णां शुचिस्मिताम् ।
आलिङ्ग्य दक्षिणकरे वामे पङ्कजधारिणीम् ॥ १४

1. (क) कस्तथा. 2. (क) विभुम्. 3. (क) महासत्वं महापक्षम्. 4. (ग) विभूषणम्. 5. (ग) स्वाङ्के.

शुक्लमाल्याम्बरधरां सर्वाभरणभूषिताम् ।
[1]उद्दियाय यथा मेरुः सविद्युद्वारि[2]दं वहन् ॥ १५

ध्यात्वैवं मध्यमे भागे स्थितमासीनमेव वा ।
द्विभुजं पूर्वदिग्भागे कृताञ्जलिपुटं विभुम् ॥ १६

पीताभं शुक्लवसनं सर्वाभरणभूषितम् ।
सुपर्णं सुमुखं पूर्णं स्थितमासीनमेव वा ॥ १७

[3]दक्षिणे षोडशभुजं गरुडं भीमविग्रहम् ।
भीमाक्षं भीमवदनं रक्ताभं कृष्णवाससम् ॥ १८

भीमाट्टहाससंयुक्तं दंष्ट्रादि? भयानकम् ।
कृष्णमाल्यानुलेपं च स्थितमासीनमेव वा ॥ १९

प्रोद्यद्धस्तैर्दधानं [4]रथचरणपवी सोमकुम्भं सिताद्रिं
नृत्यत्सर्पं च खेटं मुसलमपि सृणिं [5]दक्षिणं लम्बिताग्रैः ।
वामैश्शङ्खं [6]शताश्रं प्रचलिततटितं चायसं दण्डमुग्रं
श्येनास्यं [7]मुष्टिमुद्रे [8]गुणमतिजवनं चिन्तयेद्रक्तपङ्के ॥ २०

पश्चिमे वैनतेयाख्यं सितं बाहुचतुष्टयम् ।
श्वेताम्बरधरं सौम्यं श्वेतमाल्यानुलेपनम् ॥ २१

---

1. (क) उदयाय. 2. (क) वारिदो महान्. 3. (ग) दक्षिणे-इत्यादि श्लोकद्वयंगलितम्. 4. (ग) रथचरणयुगम्. 5. (क) लम्बिताग्रैः करा ग्रैः. 6. (क) शताश्रिम्. 7. (ग) यष्टिमुद्रे. 8. (ख) गुणमपि.

नागपाशं सुधाकुम्भं शङ्खचक्रे वहन् भुजैः ।
सितपङ्कजमध्यस्थं स्थितमासीनमेव वा ॥ २२
उत्तरे संस्मरेत्तार्क्ष्यं रक्ताभं चित्रवाससम् ।
षड्भुजं शङ्खचक्रे च शतवक्त्राग्निमेव च ॥ २३
श्वेताचलं तर्जनीं च तलप्रहरमेव च ।
मुकुटादिविभूषाङ्गं चित्रमाल्यानुलेपनम् ॥ २४
ध्यायेत् पङ्कजमध्यस्थं स्थितमासीनमेव वा ॥ २४॥
आग्नेये चिन्तयेल्लक्ष्मीं पद्मगर्भसमप्रभाम् ।
श्वेतमाल्याम्बरधरां सर्वाभरणभूषिताम् ॥ २५॥
किरीटमुकुटां सौम्यां द्विभुजां पद्मसंस्थिताम् ।
पाशाङ्कुशधरां देवीमभीष्टफलदायिकाम् ॥ २६॥
नैरृते चिन्तयेत्कीर्तिं तद्वल्लक्षणलक्षिताम्[2] ।
पीताभां शुक्लवसनां पद्मद्वयविभूषिताम् ॥ २७॥
वायव्ये तु जयां ध्यायेद्विद्रुमाभामनूपमाम् ।
नीलाम्बरधरां देवीमुत्पलद्वयधारिणीम् ॥ २८॥
ऐशाने संस्मरेन्मायां भिन्नाञ्जनचयप्रभाम् ।

---

1. (ग) नाग पाशं· इत्यादि चित्रमाल्यानुलेपनम्· इत्यन्तं गलितम्· 2. (क) संयुताम्·

चित्राम्बरधरां[1] देवीं चित्रमाल्यानुलेपनाम् ॥ २९॥
सर्वा लंक्ष्मीसमा ध्यायेत् स्थितासीना ह्यथापि वा ३०
आकुञ्च्य सर्वमपरं प्रविसार्य पादं
तिर्यङ्मुखं चटुलचक्रविवृत्तशङ्खम् ।
अन्योन्यघट्टितकरं ललशब्दयुक्त-
मुड्डीयमानमनिशं स्मर दुःखशान्त्यै ॥ ३१
एवं[2] ध्यात्वा जपेन्मंत्रं लक्षद्वादशकं तथा ।
दशांशं तर्पयेन्नित्यं तद्वद्धोमं घृतेन वा ॥ ३२
शालिपिष्टमयं नागं घृताक्तं च तथा हुनेत् ॥ ३२॥
अथ यन्त्राणि मुख्यानि वदानि मुनिसत्तम ।
पञ्चयन्त्राणि तार्क्ष्यस्य सद्यः प्रत्ययवन्ति[3] च ॥ ३३॥
अद्भुतार्थद्योतकानि सर्वसम्पत्कराणि च ॥ ३४
वह्निमण्डलमध्ये तु प्रणवोदरमध्यगे ।
क्ष्मीं[4] तु नामसमायुक्तं तद्बहिःषडरं लिखेत् ॥ ३५

---

1. (क) चित्रमाल्याम्बरधरां श्वेतपद्मधरां पराम्.
2. (क) एवं ध्यात्वा-इत्याद्यर्धत्रयं "आकुञ्च्य" इतिपद्यात् प्राक् दृश्यते.
3. (क) प्रत्यक्षयन्ति च.
4. (क) क्ष्म्म्रूम् नामानि संयुक्तम्.

अरेषु शक्तिसंयुक्तं पञ्चार्णं विलिखेत्ततः ।
च्छिद्रेष्वङ्गं ततः पद्मं सप्तार्णं वरुणान्वितम् ॥ ३६
दलेषु विलिखेत्तत्र केसरेषु स्वरान् लिखेत् ।
बहिः षोडशपत्राब्जे षोडशार्णमनुं लिखेत् ॥ ३७
कादिसान्तं लिखेन्मन्त्री केसरेषु सबिन्दुकम् ।
हं क्षाणाङ्कुशपाशेन वैदर्भं वेष्टयेद्बुधः ॥ ३८
ओं नमः पक्षिराजाय ह्रीं क्षिपः[2] प्रणवं ततः ।
वह्निजायाथ वर्मास्त्रं षोडशार्णमिदं स्मृतम् ॥ ३९
निग्रहानुग्रहपरं सर्वसम्पत्समृद्धिदम् ।
धारणादस्य यन्त्रस्य[3] सर्वरक्षाकरं भवेत् ॥ ४०
ग्रामक्षेत्रगृहादीनां पुरपत्तनकादिषु ।
रक्षाविधानं तत्रोक्तं यन्त्रेणानेन कारयेत् ॥ ४१

मध्ये तारं त्रिकोणं श्रुतिदलनलिनं सास्त्रवर्म[5]द्विकं तत्
वाह्ये किञ्जल्कभागे कचटतपयळक्षाष्टवर्गं सुपद्मम् ।
मध्ये साध्यक्रियाख्ये तदनुगुणवशाभ्यासवच्चैतदेवं
यन्त्रं न्यस्तं स्वहस्ते विषमविषगणं संहरेदप्यसाध्यम् ॥४२

1. (क) भवेत्. 2. (क) क्षिपपद मनन्तरम्. 3. (क) मन्त्रस्य. 4. (क) नमनम्. 5. (क) सास्त्रवर्म दिगन्तान्.

यन्त्रं त्वथान्यं विषवेगशान्त्यै
चतुर्दलं पङ्कजबिन्दुतारम् ।
च्छिद्रस्थयाद्यर्णचतुष्कयुक्त-
दळोदरस्थापितमन्त्रवर्णम् ॥ ४३

बाह्यस्थवृत्तोज्ज्वलहंसवर्णं
स्वनामसन्दर्शितवर्णसङ्घम् ।
पाशाङ्कुशोद्भावितशक्तिबीजं
विखण्डितक्ष्वेलहरं तदेतत् ॥ ४४

षट्कोणकोणस्थितचक्रमन्त्रं
तच्छिद्रसाङ्गं बहिरम्बुजं च ।
पत्रस्थशक्त्यङ्कुशपाशहंस-
वर्मास्त्रशक्त्यङ्कितचन्द्रबीजम् ॥ ४५

तद्बाह्यवृत्तक्षिपवह्निजाया
समन्वितं तारकसाध्ययुक्तम् ।
एतत्तु संक्रामणकृद्विषाणां
मध्यस्थबाह्याष्टकबीजयुक्तम् ॥ ४६

ठङ्कारमध्यस्थितसाग्निजान्तं
क[1]लावृतं खण्डयुगान्तरस्थम्
महामृतस्यन्दिचतुर्भुजेन
बीजेन यु[2]क्तं सलिलप्रयोगे ॥ ४७

एतत्तु दष्टस्य च मूर्ध्नि चिन्त्यं
किञ्चा[3]म्बु संप्लाव्य च दं[4]शकानाम् ।
सर्वाङ्गसन्धौ च सिरामुखेषु
हृन्नाभिगुह्यास्यशिरःप्रदेशे ॥ ४८

शङ्काविषार्तेषु च घर्मपित्त-
तीव्रज्वरोन्मादिषु जन्तुषु स्यात् ॥ ४८॥

आराधनविधिं वक्ष्ये साधकानां हिताय वै ।
स्नात्वा शुद्धः प्रसन्नात्मा वर्णाश्रमविधिं चरेत् ॥४९॥

पादप्रक्षालनं कृत्वा तथाचम्य विधानतः ।
यागभूमिं प्रविश्याथ गुरुवन्दनपूर्वकम् ॥ ५०॥

प्राणायामत्रयं कृत्वा ऊर्ध्वपुण्ड्रधरस्तथा ।
न्यासं कृत्वा विधानेन लक्ष्मीशं गरुडोपरि ॥ ५१॥

---

1. (ग) कालावृतम्. 2. (ग) वृत्तम्. 3. (क) किञ्चाम्बुजम्. 4. (ग) दंशिकानाम्.

ध्यात्वा यागोपयुक्तं च द्रव्यं संप्रोक्ष्य मन्त्रवित् ।
पात्रशुद्धिं ततः कृत्वा शुद्धतोयेन पूरयेत् ॥ ५२॥
यजेदाधारशक्त्यादीन् परिवारान् समर्चयेत् ॥ ५३
अङ्गावरणमभ्यर्च्य मूर्त्यावरणमप्यथ ।
लक्ष्म्यादीनां तृतीयं तु कुमुदादीननन्तरम् ॥ ५४
इन्द्रादीनर्चयेत् पश्चात्पञ्चार्ण[1]मनुमर्चयेत् ॥ ५४॥
आसनावाहनं पाद्यमर्घ्यमाचमनीयकम् ।
स्नानं वस्त्रं भूषणं च गन्धपुष्पसुधूपकम् ॥ ५५॥
दीपं नैवेद्यकं चैव पुष्पाञ्जलिमतः परम् ।
प्रदक्षिणनमस्कारोद्वासनानीति षोडश ॥ ५६॥
षोडशेनोपचारेण (पूजयेत् पुरुषोत्तमम् ॥) ५७
पत्रं पुष्पं फलं तोयं धूपं दीपं निवेद्यकम्
सर्वं भक्त्या समायुक्तं पूजयेन्मन्त्रवित्तमः ॥ ५८

इति श्रीगरुडपञ्चाक्षरीकल्पे काश्यपीये
द्वितीयोऽध्यायः ।

---

1. (क) वरण.

# तृतीयोऽध्यायः

गौतम :—

नमस्ते[1] ब्रह्मपुत्राय काश्यपाय महात्मने ।
श्रोतुमिच्छामि मन्त्रस्य विनियोगं वदस्व मे ॥ १

विनियोगं प्रवक्ष्यामि समाहितमनाः श्रृणु ।
शान्तिकं पौष्टिकं चैव रक्षाविधिमतः[2] परम् ॥ २

वश्यमाकर्षणं चैव ससक्षुद्रं[3] विधिं तथा ।
एवं क्रमेण कुर्वीत[4] मन्त्री मन्त्रेण मन्त्रवित् ॥ ३

पञ्चगव्यं घृतं चैव पायसं[5] च तिलं हुनेत् ।
पञ्चपातकयुक्तोऽपि सद्यः[6] पापैः प्रमुच्यते ॥ ४

हुत्वा गुळूचीरयुतमपमृत्युं[7] विनाशयेत् ।
घृताक्तदूर्वया होममायुष्करमिति[8] स्मृतम् ॥ ५

---

1. (क) नमस्तेस्तु ब्रह्मपुत्र. 2. (क) मनुत्तमम्. 3. (क) विधिमनन्तरम्. 4. (क) कृत्वाथ. 5. (क) पायसं तिलमेव च. 6. (क) सर्वशान्तिकरं भवेत्. 7. (क) मपमृत्युविनाशनम्. 8. (क) मितीरितम्.

घृताक्तसिद्धार्थहोमाद्व्रणनाशो भविष्यति ।
अन्नैरन्नसमृद्धिस्स्यात् पयसा पशुमान् भवेत् ॥ ६
किंशुकैः क्लेशनाशस्स्यात् न्यग्रोधैः स्थानशुद्धिदम् ।
नन्द्यावर्तप्रसूनेन हुत्वार्थं याचितं लभेत् ॥ ७
मातुलुङ्गप्रसूनेन अश्वत्थसमिधापि वा ।
माहिषाज्यहुताद्धोमात् कन्यासिद्धिर्भविष्यति ॥ ८
पुत्रंजीवसमित्पुष्पफलैःपुत्रमवाप्नुयात् ।
यद्वर्णं जुहुयात्पुष्पं तद्वर्णं वस्त्रवाप्नुयात् ॥ ९
स्पृशन्नष्टसहस्रं तु जप्त्वा ब्राह्मीघृतं [1]पिबेत् ।
ज्योतिष्मतीघृतं [2]वापि मेधाकरमिति स्मृतम् ॥ १०
नीवारवञ्जुलैर्हुत्वा वृष्टिकृत् पयसान्वितैः ।
हुत्वा हारिद्रचूर्णेन भस्मना वा समन्वितैः ॥ ११
[3]अपामार्गाम्रपत्रैर्वा [4]जुहुयात् ज्वरशान्तिकृत् ।
हुत्वापामार्गखदिरैः त्रिमध्वक्तैः सहस्रकम् ॥ १२
[5]राजयक्ष्मा विनश्यन्ति नात्र कार्या विचारणा ।

---

1. (क) तथा. 2. (क) पीत्वा. 3. (ग) अपामार्गार्कपत्रैश्च. 4. (ग) शीतोष्णज्वरशान्तिकृत्. 5. (ग) राजयक्ष्म विनाशेन.

आज्याक्तबिल्वसमिधा प्रमेहं नाशयेत् क्षणात् ॥१३

तिलैरर्कसमिद्भिर्वा सघृतैर्जुहुयात्ततः ।
महोदरं चोदरस्थं गुल्मशूलादि [1]नाशयेत् ॥ १४

[2]मधुत्रितयहोमं वा कपिलासर्पिषापि वा ।
मसूरिकाश्शमं यान्ति तथा शान्तिं विसर्पिकाः ॥१५

क्षीरवृक्षसमिद्धोमो गोगजाश्वादिरोगहृत् ।
सक्षौद्रशर्करं सद्यो रक्तस्रावमपोहति ॥ १६

घृतगुग्गुलुहोमेन सर्वोपद्रवनाशनम् ।
[3]शाल्मलीं विष्णुपर्णीं च वा[4]दक्षेत्रे विनिक्षिपेत् ॥ १७

सहस्रजपमात्रेण निर्विवादो भविष्यति ।
रक्तपद्मं बिल्वफलं तिलमिश्रं गुलोदनम् ॥ १८

नन्द्यावर्तप्रसूनैश्च करवीरैर्मधुप्लुतैः ।
सर्वत्र विजयं होमात् साधकस्य न संशयः ॥ १९

[5]पत्रं बैल्वं हुनेन्मन्त्री धनधान्यवि[6]वृद्धये ।
व्रीह्यादिधान्यहोमेन [7]तत्तद्धान्यं लभेन्नरः ॥ २०

---

1. (क) नाशकम्. 2. (क) मधुरद्रव. 3. (ग) मरिचं विष्णुपर्णी च. 4. (क विवादस्यान्तरम्. 5. (क) पद्मं बिल्वम्. 6. (क) समृद्धिदम्. 7. (क) तद्धान्यं लभेत क्षणात्.

द्विजाः पलाशैर्[1]नृपतिरश्वत्थैर्वैश्यजातयः ।
औदुम्बरैश्च[2] शूद्राश्च स्वर्कजैश्च क्रमाद्धुनेत् ॥ २१
कमलैर्भूसुरस्त्रीणां कह्लारैर्जातिभिस्तथा ।
[3]नृपाङ्गनानां वश्यार्थी हुनेदष्टसहस्रकम् ॥ २२
चम्पकैर्वैश्यनारीणां पाटलैश्शूद्रयोषिताम् ।
गजारिपुष्पैर्गणिकां योनिपुष्पैरवंशजाम् ॥ २३
एरण्डकुसुमै रंडां [5]वशीकुर्याद्यथाक्रमम् ।
लवणं मधुसंयुक्तं सर्ववश्यकरं भवेत् ॥ २४
तथा [6]तुष्टिमवाप्नोति नात्र कार्या विचारणा ।
साध्यनामसमायुक्तं सर्षपेण विलेपितम् ॥ २५
अष्टोत्तरशतेनैव चिताभस्माभिमन्त्रितम् ।
रिपुगेहे क्षिपेन्मूर्ध्नि क्षणादुच्चाटनं भवेत् ॥ २६
वैभीतकं हुनेन्मन्त्री माहिषाज्यसमन्वितम् ।
गृहक्षेत्रादिकं हित्वा भार्यापुत्रादिभिस्सह ॥ २७
क्षणा[7]दुच्चाटयेच्छत्रून्नात्र कार्या विचारणा ॥ २७॥

1. (क) रश्वत्थैर्भूपतिः. 2. (क) श्शूद्रजातास्त्वर्कजैः क्रमशो हुनेत्. 3. (क) भूपाङ्गनानाम्. 4. (ग) राज्ञाम्. 5. (क) एवं हुत्वा यथाक्रमम्. 6. (क) तथा कुष्टिम्. 7. (क) दुच्चाटनं कुर्यात्.

मनुजास्थिमयं कीलं पञ्चाङ्गुलसमन्वितम ।
साध्यनामसमायुक्तं सर्षपेण विलेपितम् ॥ २८॥
अष्टोत्तरसहस्रं तु दक्षिणाभिमुखो जपेत् ।
मातृस्थाने खनेन्मन्त्री मरणं नात्र संशयः ॥ २९॥
साध्यर्क्षे प्रतिमां कृत्वा प्राणस्थापनकं तथा ।
स्नुह्यर्कपयसा लिप्तमुष्णवारिगतं तु तत् ॥ ३०॥
ज्वरग्रस्तो भवेच्छत्रुर्नात्र कार्या विचारणा ॥ ३१
निम्बकाकालयं हुत्वा तत्तैलेन विमिश्रितम् ।
अष्टोत्तरसहस्रेण क्षणाद्विद्वेषणं भवेत् ॥ ३२
खं मध्ये नाम सं[1]लिख्य तद्बाह्ये टान्तमेव च ।
बाह्येदं यन्त्रमालिख्य वहिर्वर्माष्टकं लिखेत् ॥ ३३
हरिद्रालेपनं कृत्वा जपेदष्टसहस्रकम् ।
पीतपुष्पैस्समभ्यर्च्य पं[2]वनं स्थापयेत्ततः ॥ ३४
स्नुहीक्षीरैस्तु भूक्षिप्तं मो[3]हयेद्भुवनत्रयम् ॥ ३४॥
दुत्तूरकाष्ठदीप्तेऽग्नौ तत्सर्वाङ्गं पृथक् पृथक् ॥

---

1. (क) चांलिख्य. 2. (क) पवनस्थापकम्. 3. (क) स्तंभ-भयेश्च जगत्रयम्.

तत्संपिष्टरसेनाक्तं तत्तैलं वा हुनेत्ततः ।
अष्टोत्तरसहस्रं तु सप्ताहान्मोहयेद्रिपून् ॥ ३६
[1]गरुडस्य पदद्वन्द्वं मध्ये कुक्षौ च संस्थितम् ।
[2]ध्यात्वा सदा जपेन्मन्त्रं सर्वरक्षाकरं भवेत् ॥ ३७
सौवर्णे राजते ताम्रे भूर्जपत्रे पटेऽथ वा ।
पट्टके विलिखेद्यन्त्रं [3]पञ्चकं कृतशक्तिकम् ॥ ३८
अभिषेकं ततः कृत्वा धारयेद्यन्त्रमुत्तमम् ।
आयुरारोग्यमैश्वर्यं (विजपं शत्रुनाशनम् ॥) ३९
धनधान्यसमृद्धिश्च पुत्रक्षेत्रगृहादयः ।
यन्त्रधारणमात्रेण सर्वरक्षाकरं भवेत् ॥ ४०

इति श्रीमत्काश्यपीये गरुडपञ्चाक्षरीकल्पे
विनियोगविधिस्तृतीयोऽध्यायः

1. (क) मध्यकोष्ठसुसंस्थितम्. 2. (क) गत्वा. 3. (क) पञ्चाक्षरम्.

# चतुर्थोऽध्यायः ।

---

गौतमः—

नमस्सर्वज्ञ विप्रेन्द्र ब्रह्मपुत्र[1] महामते ।
विषवेगेन लोकेऽस्मिन् जन्तूनां नाशनं भवेत् ॥ १
केनोपायेन मुच्यन्ते विषोपहतचेतसः[2] ।
तद्ब्रूहि तदशेषेण[3] नमस्ते ऋषिसत्तम ॥ २

काश्यपः—

सर्वं ते कथयिष्यामि समाहितमनाश्शृणु[5] ।
स्थावरं जंगमं[4] चैव कृत्रिमं ग्रहजं तथा ॥ ३
शङ्काविषमिति प्रोक्तं पञ्चधा मम शम्भुना ।
नागानां नाम जन्मापि दंशरूपं च कारणम् ॥ ४
चेष्टितं विषवेगं च मर्म दूतस्य लक्षणम् ।
स्थानवारादिकं चैव शकुनानि त्रयोदश ॥ ५

---

1. (क) कश्यपाय. 2. (क) विषार्तोपहृता जनाः. 3. (क) तानशेषेण. 4. (क) जङ्गमं स्थावरं. 5. (ग) क्रमशश्शृणु.

तत्वान्येतानि यो वेत्ति स विद्वानिति मे मतिः ॥ ५॥
शेषवासुकितक्षाख्यकार्कोटाब्जमहाम्बुजाः ।
शङ्खपालादिगुळिकावष्टौ दिव्योरगास्स्मृताः ॥ ६॥
दर्वीकरा मण्डलिनो राजिला वैतकास्तथा ।
चत्वारः प्राकृतास्सर्पा[1]स्तेषां लक्षणमुच्यते ॥ ७॥
भ्रूमस्तकलसद्बिन्दुस्स्तब्धाक्षश्शेष उच्यते ॥ ८
वासुकिःस्वस्तिकशिराः वामपार्श्वनिरीक्षकः ।
पञ्चबिन्दुलसन्मूर्धा दक्षिणापाङ्गवीक्षकः ॥ ९
शीघ्रगामी च सततं तक्षकस्स उदाहृतः ।
रेखाङ्कितगलश्शङ्खो लसन्मूर्धा सदा नतः ॥ १०
अर्धचन्द्राङ्कितोरस्को नागः[2] कार्कोटकस्स्मृतः ।
पुच्छसञ्चलनः पद्मः पद्मभूषितविग्रहः ॥ ११
सदा निमेषकः कण्ठे[3] रेखा[4]त्रयविभूषितः ।
मूर्ध्नीन्दीवरचिह्नश्च महापद्म उदाहृतः ॥ १२
शङ्खाङ्कितशिराश्शङ्खपालः पश्यन् मुहुर्मुहुः । १२॥

---

1. (क) सङ्ख्याः. 2. (ग) नाम्ना. 3. (क) कर्णे. 4. (क) रेखाङ्कितय.

कौटिल्यं भोगसङ्कोचः श्वासो नेत्रार्धमीलनम् ॥
गूहनं स्वल्पचेष्टा च गुलिको मिश्रलक्षणः ॥ १३॥
अनन्तगुळिकौ विप्रौ रक्तौ वह्निसमुद्भवौ ।
वासुकिश्शङ्खपालश्च पीताविन्द्रोद्भवौ नृपौ ॥ १४॥
महाब्जतक्षकौ वैश्यौ कृष्णावनिलसम्भवौ ।
पद्मकार्कोटकौ शूद्रौ शुक्लावम्बुधिसम्भवौ ॥ १५॥
नागानां वंशजास्सर्पास्तत्तल्लक्षणसंयुताः ।
दशाष्टपञ्चत्रिगुणाश्शतमूर्धान्विताः क्रमात् ॥ १६॥
फणिवंशादिभूतानां नागानामुग्रतेजसाम् ।
तेषामेकैकमुत्पन्नास्सुताः पञ्चशतं पुनः ॥ १७॥
अजरामरणा घोरास्ते सर्वे कामरूपिणः ।
तदन्वयोद्भवास्सर्पा असंख्येयास्ततोऽभवन् ॥ १८॥
स्वर्गवारिधिपातालपर्वते भूतलेष्वपि ।
निवसन्ति महा[2]नागा महावीर्या महाबलाः ॥ १९॥
ततः प्राकृतचिह्नं च शृणु वक्ष्यामि गौतम । २०
रथाङ्गलाङ्गलशिरास्तीव्रा दर्वीकरास्स्मृताः ।

1. (क) तस्यान्वयो. 2. (ग) महाभागाः.

घोणाग्रदन्तयोर्दीर्घाच्छत्रमूर्धा च मण्डली ॥ २१
स्वस्तिकाङ्कितमूर्धानश्चित्रास्स्निग्धाश्च तिर्यगाः ।
राजिला वैतिका मिश्रचिह्ना मिश्रगुणान्विताः ॥ २२
दर्वीकरादित्रितया वातपित्तकफोल्बणाः ।
चतुर्था वैतकास्सर्पाः त्रिदोषगुणभूषिताः ॥ २३
बाल्ययौवनवार्द्धक्यवर्षादित्रितयेषु ते ।
विषोल्बणक्रमा मिश्रा ऋतुसन्धिवयासु ? वै ॥ २४
दर्वीकरोद्भवास्सर्पाः षट्[1]त्रिंशद्भेदकास्स्मृताः ।
[2]मण्डलीः षोडशभिदा राजिलांशास्त्रयोदश ॥ २५
वैतकांशसमुद्भूतास्सर्पाश्चैकादश स्मृताः ।
आषाढादित्रिमासे स्याद्गर्भो मासचतुष्टये ॥ २६
अतिक्रान्ते तथाप्यण्डान् सर्पकादि ? प्रसूयते ।
पञ्चाङ्गुलोरुणः कृ[3]ष्णमूर्धा सर्पस्त्रिमासतः ॥ २७
अण्डभेदो भवेत्तेषां स्फुटितान स्फुटितान् ग्रसेत् ।
शिष्टास्ततो विपद्यन्ते ते च स्त्रीपुन्नपुंसकाः ॥ २८

---

1. (क) षड्विंश. 2. (क) मण्डलीः इत्याद्यर्धद्वयं नास्ति.
3. (क) कृच्छ्रः मूर्धा सर्पोत्र.

योे जातः कार्तिके मासे तामसस्तु निरुद्यमः ।
मार्गशीर्षे बलोद्रिक्तः पौषे दीर्घो विषोल्बणः ॥ २९

उन्मील्य नेत्रे सप्ताहात् कृष्णो मासाद्भवेदहिः।
द्वादशाहा त्सवो यस्य? दन्तास्स्युस्सूर्यदर्शनात् ॥ ३०

द्वात्रिंशद्दिनविंशत्या चतस्रस्तेषु [1]दंष्ट्रकाः ।
काली करोली कमरी कालरात्रीति संज्ञिताः ॥ ३१

एताश्चतस्रो विषदा वामदक्षिणभागतः ॥ ३१॥

पुनर्मातरमन्वेति मासात्स्वेच्छं चरत्यसौ ।
षण्मासे स्यात्करायामस्तदा कृत्तिं विमुञ्चति ॥ ३२॥

क्रोडाशनिशिखिश्येनबिडालनकुलीवृकाः ।
निघ्नन्ति चेन्नेत्र[2]कर्णौ जीवेद्वर्षशतं पुनः ॥ ३३॥

द्वे शते द्वे च विंशत्या दशना निर्विषास्स्मृताः ।
चत्वारस्सविषा दन्ता जन्तुर्हिंसनतत्पराः ॥ ३४॥

सूर्यादिसप्तवारेषु शेषादीन् योजयेद्बुधः ॥ ३५
यथासङ्ख्यं क्रमान्नागान् गुलिकेन विवर्जितान् ।

1. (क) दीर्घिकाः. 2. (ग) नेत्रकण्ठे.

सप्तभागं दिनं कृत्वा रात्रावपि च कल्पयेत् ॥ ३६
अर्कवाराक्रिसंख्यादि दिवारात्रं प्रकल्पयेत् ।
इति क्रमेण नागानामुदयं कल्पयेद्बुधः ॥ ३७
गुलिकं पर्वसन्धिस्थं केचिदाहुर्मनीषिणः ।
शङ्खेन वा महाब्जेन सह तस्योदयेन वा ॥ ३८
द्वयोर्द्विनाडिकामात्रमन्तरं गुळिकोदयः ।
इष्टस्स ? कालस्सर्वत्र सर्पदंशोऽतिनिन्दितः ॥ ३९
असाध्यमिति तत्काले सर्पदष्टे तु का कथा ।
तस्मिन् काले कृतं कर्म शुभमप्यशुभं भवेत् ॥ ४०
तस्मात्सर्वाणि कर्माणि तदा मन्त्री विवर्जयेत् ।
दष्टं विद्धावलिप्तं च खण्डितं च विदुर्बुधाः ॥ ४१
क्षतमेकं भवेद्दष्टं द्विदंशं विद्धमुच्यते ।
त्रिदंशमवलिप्तं स्यात् बहुदंशं तु खण्डितम् ॥ ४२
एकदंशं विषं नास्ति द्विदंशं मन्त्रसाधकम् ।
त्रिदंशमौषधेनैव चतुर्थं मरणप्रदम् ॥ ४३

1. दंशपदस्य स्थाने दन्त इति अनियमेन अक्षरविपर्यासोऽस्ति.

दष्टस्य कारणं वक्ष्ये तेषामष्टविधं तथा ॥ ४३॥
भीतिरुन्मत्तता क्षुच्च तथाक्रान्तिश्च द्दसता ।
स्थानार्थिता पूर्ववैरमष्टम कालचोदितम् ॥ ४४॥
दंशमेकं क्षतं वक्रमपरं च न दृश्यते ।
भीतव्यालकृतं तत्तु विषं तत्र न विद्यते ॥ ४५॥
दष्टदन्तद्वयं वक्रं लालाक्तं सुकुमारकम् ।
आदिशेत्सविषं किञ्चिदुन्मत्तेनाहिना कृतम् ॥ ४६॥
दंशमध्ये तु लालाक्तं खण्डितं यत्र दृश्यते ।
कृतं क्षुधार्तव्यालेन कृच्छ्रसाध्यं तदुच्यते ॥ ४७॥
दृश्यन्ते यत्र वक्राणि सुबहूनि क्षतानि च ।
आक्रान्ताहिकृतं तत्तु विषं नैवात्र विद्यते ॥ ४८॥
क्षतानि रक्तमिश्राणि लालाक्तानि बहूनि च ।
विषं दर्पोद्भवं तस्मादसाध्यमिति केचन ॥ ४९॥
लालाक्तानि सुरक्तानि मांसमध्यगतानि च ।
क्षतानि यत्र साध्यं तद्विषं स्थानार्थिना कृतम्॥५०॥
ऋजुदंशद्वय यत्र वक्रमेकं क्षतं परम् ।

वैरोद्भवं हि तद्विद्यादसाध्यमिति केचन ॥ ५१॥

त्रिदंशमेकदंश वा क्षत क्षतजभीषणम् ।
असाध्यं तद्विषं ख्यातं कालचोदनया कृतम् ॥ ५२॥

दाही पिपीलिकास्पर्शी कण्डूरोगरुजान्वितः ॥
सन्तापग्रथितो दंशस्सविषोऽन्यस्तु निर्विषः । ५३॥
दंशचेष्टा मया प्रोक्ता कालदष्टस्य कथ्यते ॥ ५४

भेदा दशैव तत्रादौ रोमहर्षो भविष्यति ।
दाहस्वेदौ कफश्चैव सर्वाङ्गोद्वेजनं पुनः ॥ ५५

सर्वाङ्गपारवश्यं च लालास्रावः प्रलापनम् ।
स्मृतिमोहः क्रमात्तस्य दशमं मरणं भवेत् ॥ ५६

यस्यावस्था भवन्त्येवं तं विद्यात्कालदष्टकम् ।
शीताम्भसाभिषिक्तस्य नैव रोमोद्गमो भवेत् ॥ ५७

ताडितस्यापि दण्डेन तच्चिह्नं नैव लक्ष्यते ।
गात्रे शस्त्रक्षतं दद्यात् क्षतजक्षरणं नहि ॥ ५८

क्षिप्तस्य सलिले यस्य प्लवनं च भविष्यति ।
दष्टदं ? तं विजानीयान्मुक्तमन्त्रविचारणम् ॥ ५९

एवं वदन्ति विद्वांसः कालदष्टस्य लक्षणम् । ५९॥
पश्चात्पुत्रोऽथ मित्रं च तैले निक्षिप्य बुद्धिमान् ॥
कालदष्टस्य देहस्य प्रतिबिम्बं परीक्षयेत् ॥ ६०॥
सम्मीलनं च नयनमुत्फुल्लं विवृतं मुखम् ।
मृतोऽयमिति विज्ञेय इति शास्त्रस्य निर्णयः ६१॥

यस्मिन् [1]दंशे क्षरति रुधिरं श्यामलं मेचकं स्यात्
दाहस्स्वेदोऽवयवजडता रोमहर्षोऽङ्गकम्पः ।
दन्तोष्ठानामथ विकटता भारती सानुनासा
मोहः पूर्वाधिकविकृतिरित्युच्यते कालदष्टः ६२॥

धातोर्धात्वन्तरप्राप्तिर्विषवेग इति स्मृतः ॥ ६३
[2]गत्वादिधातवस्सप्त विषवेगं त्विहोच्यते ? ।
मात्रा पञ्चशतं दंशे स्थित्वा तद्वर्धते विषम् ॥ ६४
विषस्य प्रथमे वेगे रोमहर्षो भविष्यति ।
वेगे द्वितीये प्रस्वेदो मुखशोषश्च जायते ॥ ६५
वेगे तृतीये वैवर्ण्यं चतुर्थे वेपथुर्भवेत् ।

1. (ग) देशे. 2. (ग) अत्रपरमिदमर्धमस्ति.

वेगे तु पञ्चमे हिक्का गलभङ्गोऽन्धता भवेत् ॥ ६६

षष्ठे वेगे च निश्वासस्स्मृतिर्मोहश्च[1] जायते ।

सप्तमो नाम यो वेगस्तमेव मरणं विदुः ॥ ६७

शरीरावयवे यस्य दष्टे जन्तुर्न जीवति ॥ ६७॥

वेगो रोमाञ्चमाद्यो रचयति विषजस्स्वेदवक्त्रोष्ठशोषौ

तस्योर्ध्वं तत्परौ द्वौ वपुषि जनयतो वर्णभेदप्रलापौ ।

यो वेगः पञ्चमोऽसौ नयनविवंशतां[2] कण्ठभेदं च हिक्कां

षष्ठो निश्वासमोहौ वितरति च मृतिं सप्तमो दष्टकस्य॥

यस्याङ्गानां जडत्वं श्वयथुरवयवोद्वेगदाहौ प्रलापो

विड्भेदःकेशलुञ्छस्स्वकरमरुणतापाङ्गयोर्भ्रान्तिरक्ष्णोः ।

तृष्णासृक्कम्पशूला हृदि च विकटता दन्तदन्तच्छदानां

श्यामं च स्वेदपित्तोद्गमनमनुकलं रोमकूपादिषु स्यात् ६९॥

लालास्रुतिर्वमसृती[3] परिवेषबिम्बे ?

नासाश्रयाणि वचनानि च सन्धिभेदः ।

पूर्वाधिका विकृतयो विवृता भवेयुः

यस्य प्रतिक्षणमसौ किल कालदष्टः ॥ ७०॥

---

1. (क) स्मृतिभ्रंशश्च. 2. (क) विशिक्षताम्. 3. (ख) लालास्रुतिर्मृतिरिदं.

देवालये शून्यगेहे वल्मीकोद्यानकोटरे ।
द्विसन्ध्ययोश्चैत्यतरौ श्मशाने सिन्धुसङ्गमे ॥ ७१॥

द्वीपे चतुष्पथे सौधे गहने वेत्रपद्मयोः ।
पर्वताग्रे बिलद्वारे जीर्णकूपाश्मकूटयोः ॥ ७२॥

शिग्रुश्लेष्मातकाक्षेषु जम्ब्वौदुम्बरवेणुषु ।
वटे च जीर्णप्राकारे सर्पदंशो[1]ऽतिनिन्दितः ॥ ७३॥

ईन्द्रियेषु[2] च हृत्कक्षभ्रूमध्यकुचकुक्षिषु ।
ताल्वोरश्शङ्खे गले मूर्ध्नि चिबुके नाभिमध्यके ॥ ७४॥

दोःपादमध्यसन्धौ च दंशस्सर्पस्य निन्दितः ॥ ७५

पुष्पादिहस्तश्शुभवाक् चीरे[3]शुक्लाम्बरोऽमलः ।
लिङ्गवर्णस्समानश्च दष्टे दूतश्शुभो मतः ॥ ७६

दण्डी मुण्डी च लिङ्गीच वर्णिवर्णोत्तमाधमाः ।
कण्ठे कृताम्बरस्तब्धो मुक्तकेशोऽश्रु[4]भिश्रितः ॥ ७७

शस्त्री गद्गदकण्ठश्च रज्जुहस्तो विषादवाक् ।

---

1 (क) दंशस्सर्पस्य निन्दितः. 2. (क) इन्द्रियाण्योष्ठकण्ठभ्रूमध्ये च." 3. (ग) सीर. 4. (ग) शिवो. 5 .(ग) निस्सृतः.
6. (क) वान्.

अस्त्री च [1]द्रव्यहस्तश्च शुष्ककाष्ठसमाश्रितः ॥ ७८

कण्टकोल्कादिहस्तो वा शुक्लेतरपटावृतः ।
पुरुषाणां च यत् स्त्रीस्यात् स्त्रीणां तु पुरुषो भवेत्॥७९

असहायस्त्रीसहायो महिषाश्वादिसंस्थितः ।
[2]विधवासृतहस्तो वा मेदिन्यां न्यस्तलोचनः ॥ ८०

[3]काष्ठकार्पासहस्तश्च....................
तैलाभ्यक्तोत्तमाङ्गश्च कुब्जः काणोऽथ वामनः ॥ ८१

आश्यावदन्तश्श्रान्तश्च अङ्गहीनो दिगम्बरः ।
एते विवर्जिताः प्रोक्ताः कण्टकादिक्षतेष्वपि ॥ ८२

किं पुनस्सर्पदष्टानामिति [4]शास्त्रस्य निर्णयः ।
उल्काकण्टककाष्ठादि गृहीत्वा न द्वितीयकम् ॥ ८३

आगत्य त्वरितो ब्रूयात्सोऽपि कालेन चोदितः ।
दिगादिषु स्थितो दूतश्शेषादीन् सूचयेदहीन् ॥ ८४

अन्तर्गुलिकौ विप्रौ शक्रेशानदिशाधिपौ ।
वासुकिश्शङ्खपालश्च नृपौ वह्निकुबेरयोः ॥ ८५

---

1. (क) द्रव. 2. (क) भीत. 3. (क) इदमर्धं अधिकमस्ति. 4. (क) शास्त्रेषु निश्चयः.

तक्षकश्च महाब्जश्च वैश्यौ यमसमीरयोः ॥ ८५
पद्मकार्कोटकौ शूद्रौ यातुधानप्रचेतसोः ।
एते दिशां महीपालास्तेषां मन्त्रैर्विषं हरेत् ॥ ८६
वाताग्नीन्द्रा जलात्मानो वर्गेष्वर्णचतुष्टये ।
महाब्जतक्षकौ वायुवर्गप्रथमसम्भवौ ॥ ८७
अनन्तगुलिकौ वह्निवर्गद्वितयसम्भवौ ।
पद्मकार्कोटकौ पाशिचतुर्थान्तर्गतौ स्मृतौ ॥ ८८
दूतस्थितश्चेद्वामाङ्घ्रौ दक्षिणे वा द्वयोरथ ।
इडामावाहयेद्वायुं पिङ्गलां वा द्वयोरपि ॥ ८९
आभ्यां द्वाभ्यां पृथक्सर्पान् विद्यात् स्त्रीपुन्नपुंसकान् ।
दूतस्स्पृशति यद्गात्रं तस्मिन् दंशमुदाहृतम् ॥ ९०
न भोगमिति संवादे न विषं वेति निर्दिशेत् ।
दूतकाले यतो जीवः पार्श्वे दंशस्ततोऽन्यतः ॥ ९१
अग्रे दूतस्य वामाङ्घ्रिरशुभोऽन्यस्तादृशोऽन्यथा ।
दूताङ्गचलनं दुष्टं तत्स्थितिर्निश्चला शुभा ॥ ९२

1. (ग) इदमर्धं नास्ति.

जीवपार्श्वे शुभो दूतो दृष्टेऽन्यस्य समागमः ।
योजयेद्दक्षिणेनोक्तं दुष्टं वामेन जीववित् ॥ ९३

जीवो गतागतो दुष्टश्शुभो दूतनिवेदने ।
दूतस्य वाक्यं दष्टाख्यं पूर्वमाहुर्विनिन्दितम् ॥ ९४

त्रिभक्तैरस्य वाक्यार्णैर्विषं निर्विषकालतः ।
आद्यैस्स्वराद्यैः काद्यैश्च विषे भिन्ना लिपिर्द्विधा ॥ ९५

स्वरा जीवस्तनुर्वर्ण इति ज्ञेया च मातृका ।
वाताग्नीन्द्रा जलात्मानो वर्गेष्वर्णचतुष्टये ॥ ९६

नपुंसकाः पञ्चमास्स्युः स्वराश्चक्राम्बुयोनयः ।
दुष्टौ दूतस्य वाक्यादौ वाताग्नी मध्यमो हरिः ॥ ९७

प्रशस्ता वारुणा वर्णा अत्र दुष्टा नपुंसकाः ।
जीवार्काभ्युदयौ ज्ञेयौ स्वक्षेत्रेषु तथोदयः ॥ ९८

शुक्रगुर्वोर्विधोस्सृष्टिर्दूतकाले शुभा मता ।
मुक्त्वा मन्दं ग्रहास्सर्वे गच्छन्तोऽस्तमशोभनाः ॥ ९९

दूतागतिं वदेत् पूर्वं साङ्घ्रिदंशादिसूचकान् ।

---

1. (ग) कोशे तु अस्यार्धस्य स्थाने—"त्रिभि ... रस्य वाक्यै विषकालता विषस्यवा" इति दृश्यते.

प्रस्थाने मङ्गलं वाक्यं गर्जितं मेघनिस्स्वनः ॥ १००
प्रदक्षिणं फलं वृक्षं पुष्पं सस्यं जलोद्गमम् ।
गीतवादित्रशब्दश्च सिद्धये श्रुतमीदृशम् ॥ १०१
आक्रन्दितं च नारीणां दक्षिणे विरुतं क्षुतम् ।
अनिष्टसूचकं वाक्यमीदृशं स्यादसिद्धये ॥ १०२
वेश्या विप्रो नृपः कन्या गौर्दन्ती मुरजध्वजौ ।
क्षीराज्ये दधि शङ्खोऽम्बु च्छत्रं भेरी फलं सुरा ॥ १०३
तण्डुलं हेम रूप्यं च सिद्धयेऽभिमुखा अमी ॥ १०३॥
सकाष्ठस्सानलः कारुर्मलिनाम्बरभारभृत् ।
गलन्तो खरगोमायूलूककङ्ककपिद्रिजाः ॥ १०४॥
माहिषाहिशवौ मांसं निषादः पतनं वधः ।
कलहंस्सर्वजातीनां संमार्जनविलेपने ॥ १०५॥
तैलं कपालं कार्पासं भस्मेत्येतान्यसिद्धये १०६
अन्ये च येऽनुशिष्यन्ते सिद्धयसिध्द्योश्च सूचकाः ।
नासीद्यङ्गादयो नित्यं जिज्ञास्या देवमिश्रकान् ॥ १०७

---

1. (ग) निषिधः पतनं वधः. 2. (क) इदमर्धं नास्ति.
3. (क) जिज्ञासुर्देवमिश्रितम्.

कृत्तिका भरणी स्वाती मूलं पूर्वत्रयाश्विनी।
विशाखाद्रा मखाश्लेषा चित्रा श्रवणरोहिणी ॥ १०८
तारास्युस्सर्पदष्टस्य दुष्टौ मन्दकुजौ तथा॥ १०८॥
पञ्चमी चाष्टमी षष्ठी रिक्ता दष्टस्य निन्दिताः।
तस्यातिनिन्दिता कृष्णा पञ्चमी च त्रयोदशी॥१०९॥
सन्ध्या चतुष्टयं दुष्टं दग्धयोगाश्च निन्दिताः।
एवं क्रमेण ज्ञात्वैव लक्षणं समुदाहरेत् ॥ ११०॥

इति काश्यपीये गरुडपञ्चाक्षरीकल्पे नागोपद्रवादि
लक्षणविधिश्चतुर्थोऽध्यायः।

-:०:-

## पञ्चमोऽध्यायः ।

गौतम :—

नमस्ते मम नाथाय सर्वजन्तुहितैषिणे ।
विषसंहाररूपं च [1]तत्क्रमं वद सुव्रत ॥

काश्यप :—

समन्त्रगणमौषधं [2]प्रतिवदामि संक्षेपतः
कलौ झटिति [3]साधकं गरलगुप्त्यभिव्यञ्जनम् ।
समस्तसुखकारणं [4]सकलजन्तुसाधारणं
विखण्डित[5]सिरोल्लसद्विषविनाशने लम्पटम् ॥

[6]खं बीजरहितं मन्त्रं पृथिवी सम्पुटीकृता ।
संस्तम्भयेति वीप्सान्ते वदनात् स्तंभयेद्विषम् ॥

व्यत्ययात् खगराण्मन्त्रो मेदिनीजलबीजयोः ।
संप्लावयद्वयं ब्रूयात् [7]प्लावनादमृतीकृतः ॥

1. (क) तत्सर्वम्. 2. (क) प्रतिपदादि. 3. (क) साधनं सकलजन्तु साधारणम्. 4. (क) गरलगुप्त्यभिव्यञ्जनम्. 5. (ग) चिरो. 6. (क) बीजं हरितो. 7. (ग) सवनां.

तज्जप्त्वा वेणुवीणादिशङ्खभेर्यादिनिस्स्वनैः ।
सहसोत्थापयेद्दष्टमम्भसां चाभिषेचनात् ॥ ५
व्यत्ययादेव विपतेर्मेदिनीवह्निबीजयोः ।
दहपचद्वयाभ्यासाज्जप्त्वा संस्तम्भयेद्विषम् ॥ ६
समीरमेदिनोबीजं व्यत्ययाद्विपतेर्मनुः ।
सङ्क्रामयद्वयं ब्रूयाद्गच्छ गच्छेति भाषणात् ॥ ७
व्यत्ययाद्विपतेर्व्योममेदिनोबीजयोरपि ।
संक्षिप ह् प्रक्षिप ह् द्वयं विषहरं परम् ॥ ८
तारं शक्तिं च तारं च प्रों [1] यं ह्रीं ठं पदान्वितम ।
तारं च चक्रमन्त्रं च तारं कुरुकुल्लेपदम् । ९
वह्निजयासमायुक्तं गारुडं विषनाशनम् ॥ ९॥

आजानोस्स्वर्णवर्णो हिमगिरिसदृशो नाभितो वह्निरोचि-
राकण्ठादाच मूर्ध्नो गगनरुचिरथो नासिकाश्यामवक्रः ।
एवं व्याताण्डदेहं प्रचलितगरुतं भूजलाकाशतेजो.
वातानां मण्डलेषु [2] स्मरति विषगणस्तोमसङ्क्रामणादौ १०॥

1. (क) प्रों क्षूं. 2 (क) स्मरतु विषगतस्ताप.

मन्त्राः--

ॐ ठम् ष्ट्रौम् हुम् फट्-अस्य ऋषिः काश्यपः, पङ्क्तिश्छन्दः देवता महातार्क्ष्यः ठम् बीजम् हुम् शक्तिः नागाकृष्टिर्विनियोगः. पञ्चाक्षरीवत् षडङ्गः। आगच्छन्तु महानागाः अनन्त, गुलिक, वासुकि, तक्षक, क्षरं कित? शङ्खपाल, पहाब्ज, कार्कोटक, पद्म, ॐम् नमो भगवते, गरुडाय नागशत्रो, भगवन्, नागलोकमाक्रम्य हन, भ्रामय, हुलु, मुरु खिलि, नमो नमः।

अम् अनन्त, कम् खम् गम् घम् ङम्।
आम् इम् वासुके, चम् छम् जम् झम् ञम्।
ईम् उम् तक्षक, टम् ठम् डम ढम् णम्।
ऊम् ऋम्-कार्कोटक, तम् थम् दम् धम् नम्।
ॠम् ऌम्-पद्म, पम् फम् बम् भम् मम्।
ॡम् एम् महापद्म, यम् रम् लम् वम्।
ऐम् ओम शङ्खपाल, शम् षम् सम् हम्।
औम् अम् गुलिक, औम् क्षम् अः पट् ह बन्ध

मोहय मोहिनि सान्निध्यं कुरु. प्रलयाग्नितेजसोत्थ करणात्मजांतवेदसे स्वाहा. एष सर्पा[1]कर्षणः । ११॥

सुपर्ण पतङ्गाधिपते गुलु गर्ज नागान् त्रासय भ्रामय मुह्य कैङ्कि आविश सुपर्णपतङ्गगरुड आज्ञापयति स्वाहा. अनेनापि सर्पोच्चाटनं भवति ॥ १२॥

ओम् काम् नाम् मम् क्षम् क्षिप ओम् षम्-षम् षम्-पक्षि-षम्-ओम्-षम्-स्वाहा अस्य मन्त्रस्य दक्षप्रजापतिरुद्रावृषी. पङ्क्तिर्गायत्रीच्छन्दः. लक्ष्मीनारायणं[2]संप्रीतः गरुडो नारायणो देवता. क्षीम् बीजम्, स्वाहा शक्तिः चतुर्विधपुरुषार्थे विनियोगः. षम् इति करेन्या सादिकं कृत्वा ज्वल ज्वल इत्यादि षडङ्गं कुर्यात्

पश्चात् अष्ट नागविद्यान्यासः. पादादि मूर्धपर्यन्तं अंम्-अनन्त कम् खम् गम् घम् ङम् आम्. इत्यादि पश्चाद्गदूषिणीविद्यान्यासः अक्षिमतङ्गिकेत्यादि पश्चात्प्रार्थनादिजपान्तं पूर्ववत्सर्वं समापयेत् । १३॥

1. (ख) कटङ. 2. (क) सुप्रीतेः.

अतः परमाराधनक्रमो वक्ष्यतेः—

"ब्राह्मे मुहूर्ते उत्थाय" इत्यादि स्मृत्युक्तवर्णाश्रमविधिं कृत्वा पादप्रक्षालनं कृत्वा गरुडवन्दनपूर्वकं श्रीमद्गरुडं संस्मृत्य यागभूमिं प्रविश्य आसन उपविश्य प्राणानायम्य यथाविधि न्यासादिक्रमं कृत्वा अर्घ्यपात्रं शुद्धोदकेन पूरयित्वा तस्मिन् सुगन्धादि द्रव्यं युङ्क्त्वा आधारशक्त्यादीन् यजेत् । १४

ऐं आम् आधारशक्त्यै नमः । ओम्-अम् अनन्ताय नमः । ओम् कूर्म-कूर्माय नमः । ओं-कम् कन्दाय नमः । ओम्. सहस्रादित्योदयप्रभामणिगणसहस्रफणाकारानन्तनालाय पद्माय नमः । ततः प्रणवेन सुगन्धाक्षतपुष्पादिद्रव्याणि संप्रोक्ष्य पद्ममध्ये ओम् कर्णिकायै नमः ओम्. सिम् सिंह्मासनाय नमः ।

तस्मिन् गरुडोपरि लक्ष्मीशं देवमावाह्य अर्घ्यपाद्याचमनीयस्नानवासोभूषणगन्धपुष्पधूपदीपनैवेद्यताम्बूलपुष्पाञ्जलिप्रदक्षिणनमस्कारोद्वासनपर्यन्तं प्रणवेन

नामसंयुक्तं कृत्वा तद्बाह्ये षड्दलेषु षडङ्गं प्रदक्षिण क्रमेण प्रतिदलमेकैकं यजेत् ।

तद्बाह्ये पूर्वाद्यष्टदलेषु, पूर्वस्मिन् दले—ओम्. सुम्. सुपर्णाय नमः । दक्षिणे--ओम् गम्. गरुडाय नमः । पश्चिमे—ओम्. वम् वैनतेयाय नमः । उत्तरे—३ॅम्. तम्. तार्क्ष्याय नमः । आग्नेये—ओं. लम् लक्ष्म्यै नमः । नैरृते—३ॅम्. कीम्. कीर्त्यै नमः. वायव्ये—ओं. जम्. जयायै नमः । ऐशाने—३ॅम् माम्. मायायै नमः । तद्बाह्ये दशदलेषु, पूर्वादिप्रादक्षिण्य-क्रमेण दलद्वये, ओम्. कुम्. कुमुदाय नमः । ओम्. कुम् कुमुदाक्षाय नमः । ओम्. दम्. दक्षिणाय नमः । ओम्. पुम्. पुण्डरीकाय नमः । ओम्. वाम्. वामनाय नमः । ओम्. सम्. सनकाय नमः । ओम्. सम्. सनत्कुमाराय नमः । ओम्. शम्. शङ्कुकर्णाय नमः । ओम्. सम्. सर्वनेत्राय नमः । ओम्. सुम्. सुमुखाय नमः । तद्बाह्ये अष्टदलेषु, पूर्वादिप्रद-

क्षिणक्रमेण–ओम्. इम्. इन्द्राय नमः। ओम् अम्. अग्नये नमः। ओम् यम्. यमायं नमः। ओम्. निम्. निऋतये नमः। ओम्. वम्. वरुणाय नमः। ओम् वाम् वायवे नमः। ओम् कुम् कुबेराय नमः। ओम् ईम् ईशानाय नमः।

तद्बाह्ये पञ्चदलेषु, पूर्वादिक्रमेण ओम्. क्षिम्. मम्. प्रम्. शम्. स्राम् तम्. पृथिव्यै नमः ओम्. पम्. अम्. स्वम्. सम्. रम्. तम्. वरुणाय नमः। ओम्. ओम्. तेम्. कम्. सम्. तम्. तेजसे नमः। ओम्. स्वाम्. वाम्. रम्. तम्. वायवे नमः। ओम्. हूम्. ह्राम्. आम्. गम्. सम्. रम्. तम्. आकाशायनमः।

बाह्ये पूर्वाद्यष्टदलेषु शेषादीन्यजेत्। ओम्. अम्. कम्. खम्. गम्. घम्. ङम्. अम्. अनन्त विषं हर हरं. संक्षिप ह प्रक्षिप ह .अनन्तहृदयाय पुः स्वाहा। ओम्. इम्. च्चम्. छम्. जम्. झम्. ञम्. ईम्. हूम्. जम् वासुकि विषं हर हर. संक्षिप ह. प्रक्षिप ह. वासुकि-

हृदयाय पुः स्वाहा। ओम् उम्. टम्. ठम्. डम् ढम्. णम्. ऊम् मम्. तक्षक विषं हर हर. संक्षिप ह. प्रक्षिप ह. तक्षक हृदयाय पुः स्वाहा ओ.। ऋम्. तम्. थम्. दम्. धम्. नम्. ॠम् स्फर स्फुर स्फोटय हुम् फट् कार्कोटक ५ विषं हर हर संक्षिप ह. प्रक्षिप ह कार्कोटकहृदयाय पुः स्वाहा। ओम्-ऌम् पम् फम् बम् भम् मम् ॡम् दह पच च्छिन्दि अहो ? पद्म विषं हर हर संक्षिप ह प्रक्षिप ह अहो पद्महृदयाय पुः स्वाहा। ओम् एम् यम् रम् लम् वम् ऐम् अः महापद्म विषं हर हर संक्षिप ह प्रक्षिप ह महापद्महृदयाय पुः स्वाहा। ओम् ओम् शम् षम् सम् हम् ळं[1] हं सः शङ्खपाल विषं हर हर संक्षिप ह प्रक्षिप ह शङ्खपालहृदयाय पुः स्वाहा। ओम् अम् ळम् क्षम् अः[2] क्षु क्षुः चुळु गुलिक विषं हरे हरे संक्षिप ह प्रक्षिप ह गुलिकहृदयाय पुः स्वाहा।

१५ एवं पञ्चावरण परिवारान् सर्वान् सर्वोपचारैः भक्ति

1. (क) ॐम्. हम्. सम्. 2. (ख) ङः.

युक्तस्समर्प(र्च)येत्। एवं विधानेन प्रतिदिवसं अथवा दर्शे सङ्क्रान्तिषु विषुवे ग्रहणे अन्येष्वपि विशेषतिथिषु पूजां कुर्वन् साधकः श्रीगरुडवत् सर्वकार्येषु अप्रतिहतशक्तिर्भवति। १५

काश्यपः—

शनिवारस्य रात्रादौ दिवाकरदिनावधि।
घटिकाषष्टिपर्यन्तं शेषादीन्योजयेत्क्रमात्॥ १६

गुलिकस्य चतुः पश्चादर्कवारनिशादिकम्।
सोमवारदिवारात्रं घटिका नवतिर्भवेत्॥ १७

वासुकिप्रभृतीनां तु योजयेद्गुलिकस्य षट्।
अङ्गारवारमापन्ना पञ्चाशद्घटिकावधि॥ १८

तक्षकादिमहीपानां सप्तकं गुलिकस्य तु।
बुधवासरतच्छेषं चत्वारिंशदिति स्मृतम्॥ १९

कार्कोटकादिभूपानां गुलिकावधि पञ्चकम्।
बुधवारनिशात्रिंशत् पञ्चाशज्जीववारके॥ २०

पद्मकादिमहीपानां गुलिकस्य त्रयं विदुः।

तच्छेषं शुक्रवारं च घटिका सप्ततिर्भवेत् ॥ २१
महापद्मादिभूपानां प्रत्येकं नव नाडिकाः ।
गुलिकस्य तथा सप्त त्रिंशम्मन्द ? दिवा भवेत् ॥ २२
शङ्खपालादिभूपानां प्रत्येकं च चतुः स्मृताः ।
गुलिकस्य त्रयं प्रोमिति राज्यविभागता ॥ २३
राज्ञां कालेषु दष्टश्चेत् जातिर्वा ? निन्दिताप्युत ।
विषं तद्विषमं मन्त्री तत्तन्मन्त्रेण संहरेत् ॥ २४

अथ यन्त्रविधानम् :—

प्रथमयन्त्रम्.

प्रणवमध्ये त्रिकोणम् तद्बहिः षट्कोणम्. तद्बहिः अष्टदलं पद्मम्, तद्बहिः षोडशदलं पद्मं विलिख्य, त्रिकोणमध्ये क्ष्म्यूम् साध्याख्यं च विलिखेत् । अन्तरालेषु षडङ्गं लिखेत् । ज्वल ज्वल इत्यादि षोडशदलेषु षोडशार्णमनुं अक्षरशो विलिख्य दलान्तरालेषु कादि सान्तं द्वन्द्वशो लिखेत् । तद्बहिः पाशाङ्कुशाभ्यां वेष्टयेत् । एतद्यन्त्रं सर्वरक्षाकरं भवति ।

ओं नमः पक्षिराजाय ह्रीम् क्षिप ओम् स्वाहा हुं फट् ।
अयं षोडशार्णमनुः क्षं पाशं हः अङ्कुशम् ॥ २५

अथ द्वितीययन्त्रम्.

प्रणवमध्ये त्रिकोणं, तद्बाह्ये चतुर्दल पद्मं, विलिख्य चतुर्दलेषु प्रत्येकं कवचास्त्रद्वयं विलिख्य अष्टददलेषु क च ट त प य श क्ष अष्टवर्गान् विलिख्य अन्तरालेषु स्वरान् द्वन्द्वशो लिखेत् । प्रणवमध्ये त्रिकोणं मध्ये साध्यकीयान् विलिख्य कोणेषु सम् रम् तम् इति लिखेत् । एतद्यन्त्रं स्वहस्ते विन्यस्य असाध्यं विषं हरेत् ।
अथ तृतीययन्त्रम् । २६

वृत्तमध्ये त्रिकोणम् तद्बाह्ये चतुर्दलम्, विलिख्य चतुर्दलाग्रेषु अनुस्वारसहितं प्रणवं विलिख्य दलोदरेषु पञ्चार्णं लिखेत् । त्रिकोणमध्ये हं. इति लिखेत् । चतुर्दलान्तरेषु यम् रम् वम् इति विलिख्य तद्बाह्ये वृत्तं तस्य परितः हं सः क्षीम् हम् सः पम् हम् सः
१५ ओम् हं सः स्वाम् हं सः हाम् इति वेष्टय, तद्बाह्ये

चतुर्दलपद्मं विलिख्य क्षम् हम् क्षीम् स्वाहा इति लिखेत् । एतद्यन्त्रं विखण्डितक्ष्वेळहरं भवति ॥ २७

अथ चतुर्थयन्त्रम्.

षट्कोणं लिख्य ? कोणेषु चक्रमन्त्रं लिखेत् अप्रतिहतशासनाय हुम् फट् स्वाहा । नमस्सुदर्शनायस्वाहा । अस्त्राय फट् इति चक्रमन्त्रः । छिद्रेषु षडङ्गं ज्वल ज्वल इत्यादि लिखेत् । तद्बहिरष्टदलं पद्मं दलेषु शक्त्यङ्कुश पाश हंस वर्मास्त्र शक्ति सहितचन्द्रबीजानि सबिन्दुकानि विलिख्य तद्बाह्ये वृत्तम् तस्य परितः क्षिप स्वाहा ओमिति साध्यक्रियासहितं लिखेत् । तद्बहिरष्टदिक्षु मध्ये च मन्त्रबीजाक्षरं लिखेत् ॥ एतद्यन्त्रं सङ्क्रामणकृद्भवति ॥ २८

अथपञ्चमं यन्त्रम्.

मकारं ? विलिख्य तन्मध्ये [1]ठम्, वम्, जुम्, सम्, झम्, हूम्-इति विलिख्य तद्बहिः स्वरैर्वेष्टयेत् । पूर्व दक्षिण पश्चिमोत्तरेषु चन्द्रखण्डान्

1. (क) अम्.

वकारसहितान् लिखेत् । अर्धचन्द्राकृतिश्चन्द्रखण्डः । एतद्यन्त्रं जले विलिख्य विद्वान् सहस्रवारं जप्त्वा दष्टस्य मूर्ध्नि क्षिपेत् । इति पञ्च यन्त्राणि.

भूर्जपत्रादिषु सर्पोच्चाटनयन्त्रं लिखेत् । षट्कोणं
५ विलिख्य तद्बहिः पञ्चपत्रं लिखेत् । षट्कोणमध्ये प्रणवं तन्मध्ये, अस्त्रं, कोणेषु कुरुकुल्ले स्वाहा. इति लिखेत् । पञ्चपत्रेषु विलोमतः मूलमन्त्रं लिखेत् । एतद्यन्त्रं स्पृष्ट्वा शतवारं विलोमतः मूलमन्त्रं जप्त्वा वल्मीकादिषु क्षिपेत् । सर्पोच्चाटनं भवति ॥ ३०

१० लिपिपङ्कजकर्णिकायां साध्याख्यां वज्रं ऋं च विलिख्य. कुबेरयमवरुणेन्द्रादिदिक्षु मध्ये पञ्चार्णं विलिख्य वायुवह्निनिर्ऋतीशानेषु यादीन् सबिन्दुकान्विलिख्य पूर्वाद्यष्टदिक्षु वर्गाष्टकं लिखेत् । एतद्यन्त्रं फणिवधं ? भवति ॥ ३१

१५ ओम् क्षिप ओम् स्वाहा स्तम्भय आम् क्षिप ओम् स्वाहा. सम्प्लावय ओम् ओम् पक्षि स्वाहा. दह दह

पच पच ओम् स्वा ? प ? क्षिप ह्रा संक्रामय ओम् ह्रा प ? ओम् स्वा ? संक्षिप ह्रां प्रक्षिप ह्रा । ओं ह्रीं प्रोम् नृम् ठम् ॐम् अप्रतिहतशासनाय हुम् फट् नमः । सुदर्शनास्त्राय फट्. ओम्. ओम् कुरुकुले ५ स्वाहा । एष सुदर्शन गारुडो विषसंहारः । ओम्.

अथ औषधग्रहणविधिः. ३२

सूर्याय नमः. ओम् सुप्रभायै नमः. ओम् झम् सोमाय नमः. ओम् थम् चन्द्रायनमः. ओम् नमो महौषधाय स्वाहा । ३३

१० येन त्वा विदधे ब्रह्मा येनेन्द्रो देवता इह ।
तेन त्वां हारयिष्यामि तिष्ठ तिष्ठ महौषधे ॥ ३४

ओम् नमो महौषधीभ्य ऊर्जस्वत्यो भविष्यथ. तद्वीर्यैः कृत्स्नं कुरुध्वं. पच हन मारय तुभ्यं नमः । ३५

अथाङ्गदूषणीविद्यान्यासविधिः.

१५ ओम् ठम् आम् झः ओम् लः ओम् तः ओम् पः

1. (ग) सहाः.

नाभिहृद्गलतालुललाटेषु न्यस्य पुनः पम् सर्वाङ्ग-सन्धिषु न्यसेत् । ओम् अक्षिमातङ्गिके अक्षरसर्प मुखनिवारिणि शाङ्करि लम्बरि कुक्कुटमयूरेश्वरि दूषय गाम भाम् हुम् । अनया अङ्गदूषणीविद्यया सर्वाङ्ग-न्यासः । सू.? क्षाम् लुम्ध्वम्. इत्यानन्दपञ्चकम् । ३६

आखूनां-ओम् हूम् विषं हर हुम् पक्षि वसुन्धराविवरं गच्छ थुम् हः स्वाहा ।(अहिमथनमित्थं)दग्धं चिन्तयेत् । ओम् नमो भगवते खेट सहस्रभुज सहस्रनेत्र सहस्र-नीलमुख विषं दह विषभोजन वज्रदंष्ट्र हन हुं मुष्टि बन्धन विषं धर लव पक्षि फट् स्वाहा । सूकरेणा हिं ख्वादि (तं) ध्यायेत् । विषापहरणं भवति । ३७

ओम् हूम्. भूम्यां गच्छ विषान्मुक्तोसि स्वाहा । ओम् ठः । एषः क्ष्वेळशोभहत् । ३८

ओम् ह्रां ह्रीम् तल्प पङ्क्ति देव ? अः विरे विर विषान्मुक्तोसि स्वाहा. अनेनमन्त्रेण अभिमन्त्रितेन

1. (क) चर. 2. (ख) हूः.

अर्कपुष्पेण ताडयेत् । आखु विषनाशनं भवति ॥ ३९

नमस्सर्वमूषिकेभ्यो विश्वामित्रः आज्ञापयति. शीघ्रं गच्छन्तु मूषिकाः स्वाहा । श्रीलाङ्गलाख्यामिमां[1] विद्यामाहुः. मूषिक विषनाशः ॥ ४०

५ ओम कः एः झ्रः औः ठः. एतं चिन्तामणिमनु जप्त्वा. आखु विषं हरेत् ॥ ४१

एकचरणे पुः अशरणे पुः विशरणे पुः एष आखूच्चाटनः ॥ ४२

ओम् नमस्सर्वसिद्धान्तपुरुष हुरु स्वाहा । आखु नाशनं । सर्षप मिश्रगुग्गुलुधूपेनाखुनाशनम् ॥ ४३

ओम् स्वर्णदंष्ट्र वज्रदंष्ट्र मत्तवराह[2] मत्तकुञ्जर धुरु धुरु स्वाहा । एषोप्याखुनाशनः ॥ ४४

ओम् नमो भगवते वज्रशब्दमूषिकमृग[3]गणं भक्षय बन्धय हुम् फट् । अनेन आखू च्चाटनं भवति ॥

1. (ख) लाङ्गलाख्यमन्त्रमाहुः क्ष्वेलशोफनाशः. 2. (ख) वाराङ्ग. 3. (ख) वराहन्दजातु? विष भक्षयं बन्धय तुण्ड भक्षयेत्यादि.

अथ वृश्चिकमन्त्रः.

ओम् स्रांम्[1] हुम् टेम् हिलि पुः स्वाहा। हुम् फट् स्वाहा। हिलि पुः बिष्णवे पुः सर्वेभ्यो देवेभ्यः पुः स्वाहा। एते वृश्चिक विष नाशनाः। ४६

५ ओम् हुम् फट् वरं[2] किरि किटि. खड्गेन च्छिन्धि शूलेन भिन्धि चक्रेण दारय हुम् फट् स्वाहा। एष गर्दभाश्वादि विषापहः॥ ४७

ओम् नमो भगवते विष्णवे सुरवर श्रीगरुड प्रभञ्चन प्रभेदन विमर्दन हुम् फट् स्वाहा। अयं क्रिमिकीरादि विषापहः॥ ४८

अम्-क्ष्वेम् क्ष्वेम् विषं खात्वा ? शतावृत्या विषं संहरेत्। अलकाधिपते यक्षराज गुह्यकगणाधिप उल्कादंष्ट्र त्वमेव मे निर्विषं कुरु मा चिराय स्वाहा। ओम् नमो भगवते गरुडाय महेन्द्ररूपाय पर्वतशिखराकाराय संहर मोह्य चालय पातय विषममृतसदृशं भक्षयामि

1. (ख) प्रांम्. स्रांम्. 2. (ख) तिरिः गिरि किटि.

मे ललपक्ष विषहर स्वाहा । एते स्थावरविषापहाः ॥ ४९

ओम् नमो मातः हुलु हुलु सर्वविषेभ्यो गौरी चण्डालिनी मातङ्गिनी हरिमायिनीस्वाहा । अयमपि स्थावरविषापहः ॥ ५०

५ अथ यन्त्रान्तरविधानम्.

बिन्दुमध्ये षट्कोणम् विलख्य कोणेषु सुदर्शन मन्त्रम् ओम् ह्रीम् ओम् प्रम् नृम् ठम् ओम् नमः सुदर्शनाय कुरुकुले स्वाहा । तत्प्रणवेन वेष्टयेत् । तद्बाह्ये पञ्चदलेषु पञ्चार्णं विलोमतो लिख्य ? तत्सर्पोच्चाटनं भवति । ५१

प्रथमं त्रिकोणं विलिख्य तन्मध्ये रेफं तत्प्रणवेन संवेष्ठय तद्बहिः पञ्चमुखान् परितो विलिख्य षम्. षम्. षम्. षम्. षम्. इति पञ्चमुखम् । तद्बहिः भकारेण संवेष्टय तद्बहिः क्षीम् ह्राम् ह्रीं इत्येतैः संवेष्ठय तद्बहिः नागानां नामभिः परिवेष्ठय तद्बहिः स्वाहया परिवेष्ठयेत् । एतद्य न्त्रं स्तोभकसंहारक भवति ।

---

1. (ख) हूम् ओम् फम्.

पीतं वज्रचतुष्कोणं पार्थिवं शक्रदैवतम् ।
वृत्तार्धमाप्यं पद्माङ्कं शुक्लं वरुणदैवतम् ॥ ५३
त्र्यश्रं स्वस्तिकया युक्तं तैजसं वह्निदैवतम् ।
षट्[1]कोणविन्दुसंयुक्तं वायव्यं कृष्णवर्णकम् ॥ ५४
श्यामवृत्तं तदाकाशं विद्युत्संघसमाकुलम् ।
निश्चलं विष्णुदैवत्यं भूतबिंबं यथाक्रमम् ॥ ५५
भूबिंबे कनकाचले नृ (न्द्र) सदृशं स्वाहाचतुष्कोल्लस
त्कोटीपन्नगपाशशङ्खविलसच्चक्रं निषण्णं दृढम् ।
आश्यामाम्बरवीतमुन्नतबृहत्स्कन्धं सुपीनोदरं
रोग क्ष्वेळ पिशाच भूतमरुतां संस्तंभकं संस्मरेत् ॥ ५६
ध्यायेंद्वारुणम ण्डले सुविमलाम्भोजोदरे संस्थितं
हस्तस्थामृतकुम्भनिस्सृतसुधाधाराभिमग्नं ज[2]नम् ।
कुर्वन्तं विषदष्टमिन्दुसदृशं सच्छङ्ख[3]चक्रोज्वलं
मुक्ताहारकिरीटमाल्यविलसद्दंष्ट्रेन्दुरेखाढ्यम् ॥ ५७

---

1. (ख) वृत्त षड्बिन्दुयुग्वायुदैवतम्. 2. (क) जलम्.
3. (क) चक्रोल्लसन्मुक्ता.

तेजोमण्डलगं महाजवयुतं कालाग्निलक्षोज्ज्वलं
हेमाभाम्बरचित्ररत्नमुकुटं व्याप्ताखिलाशामुखम् ।
दोर्भिश्शङ्खमरिं शताश्रिदहनश्वेताचलांस्तर्जनी-
मुद्रां च [1]प्रतलं विषग्रहगणं स्तम्भे दधानं स्मरेत् ॥ ५८
ध्यायेद्वायुगृहे दलाष्टकयुते पद्मेऽष्टबाहुं करैः
शङ्खं चक्रसुधाकरं फणिकरं सालं च मुष्टिं [2]तथा ।
अन्यद्धस्ततलप्रहारविलसद्दण्डायुधं भीषणं
ध्यायेद्विष्णुरथं विभाव्य गरलं सङ्क्रामयेत्स्वेच्छया ॥
[3]व्योममण्डल मध्यस्थं बाहुषोडशसंयुतम् ।
षोडशायुधसंयुक्तं पञ्चवर्णं महाजवम् ॥ ६०
सर्वाभरणसंयुक्तं सर्वक्ष्वेलविनाशनम् ।
ध्यात्वा च संहरेन्मन्त्री सर्पसंहारकारकम् ॥ ६१
यन्त्राणि चाश्चर्यकराणि पञ्च
विज्ञाय सन्त्राहि समस्त जन्तून् ।
विषज्वरं शूलविसर्पिकांश्च
कुक्ष्यक्षिरोगांश्च निहन्ति कुष्ठान् ॥ ६२

1. (क) व्रतमण्डलीं विषगणस्तोभे. 2. (क) धृतम्. 3. (क) श्यामम.

अत्रिपञ्चकशिरोविभूषिता
बिन्दुनादलिपिसंयुताम्बिका ।
कालकूटविषहारिणी क्षणात्
भानुरन्धतमसं यथोषसि ॥ ६३

समुखालिखितशान्तपञ्चका[1]
शक्तिरिन्दुसहिता विसर्गिणी[2] ।
दर्शनेन सकलं विषं हरेत्
शूलविद्रधिविसर्पिकानपि ॥ ६४

अभिमुखलिखितानामर्धनारीश्वराणा
मुदरगवरुणानां बाह्यगा पूर्णसर्गा ।
सकलगरलहन्त्री शक्तिरत्यद्भुतार्था
मम हृदयमिवेयं ज्ञापिता गोपनीया ॥ ६५

सत्यं सत्यमुखोदरं विलिखितं क्रूरत्रया शाम्भवी
शक्तिं बिन्दुविसर्गिणीं करतले[3] सञ्चिन्त्य तां चेतसा ।



1. पञ्जरा. 2. विसर्पिणीं चसहिताम्.

सद्यः कुष्ठविषापहारनिपुणो भागीरथी सा यथा
पापानामखिलात्मरक्षणविधौ वृत्तिर्यथा वैष्णवी ॥ ६६

क्ष[1]कारोपरि टा[2]न्तस्य तत्परं ता[3]न्तमेवं च ।
ततो दीपिकया वेष्टय विषरोगज्वरापहम् ॥ ६७

स्थावरं विषमशेष जं[4]ङ्गमं कृत्रिमं ग्रहकुलाविशङ्कितम् ।
इत्थमुक्तमिह यन्त्रबृन्दकं गोपनं रहसि तत्तु गौतम ॥

[7]तार्क्ष्यहस्तमथो वक्ष्ये साधकानां हिताय वै ।
कर्णिकाकेसरोपेतमष्टपत्रविभूषितम् ॥ ६९

क्षौं[5] बीजं विन्यसेन्मध्ये केसरेषु स्वरान् लिखेत् ।
कादिवर्गान् लिखेत् सप्त पत्रे चान्त्ययुतं परम् ॥ ७०

मातृकाम्बुजमेवं स्याद्धृदये वामहस्तके ।
स्व[6]वर्णचिह्नसंयुक्तं देवतानागसंयुतम् ॥ ७१

वासुकिश्शङ्खपालश्च पृथिवीमण्डलावृतौ ।
पद्मकार्कोटकौ नागौ वरुणालयसङ्गतौ ॥ ७२

1. (क) षका. 2. (क) तान्तं स्यात्. 3. (क) पान्त. 4. (क) सङ्गमम्. 5. (क) क्रौम्. 6. (क) स्वर्णाभि. 7. (क) इदमर्धं नास्ति.

अनन्तगुलिकौ सर्पौ वह्निमण्डलसंयुतौ ।
महाब्जतक्षकौ नागौ वायुमण्डलसंवृतौ ॥ ७३

भूरादि वायुपर्यन्तं मण्डलं वेष्टयेत्क्रमात्
आकाशमण्डले भागे भिन्नाञ्जनचयप्रभम् ॥ ७४

अङ्गुष्ठादिकनिष्ठान्तं मध्यपर्व न्यसेत्क्रमात् ।
श्रीमद्गरुडपञ्चार्णं विभजेद्व्यञ्जनस्वरौ ॥ ७५

आदिपर्वन्यसेन्मन्त्री अङ्गुष्ठादिक्रमात्ततः ।
नागानामादिवर्णं च मन्त्रवर्णं यथाक्रमम् ॥ ७६

भूरादिमण्डले लिख्य मध्यपर्व यथाक्रमम् ।
भूतानामादिवर्णांश्च अङ्गुष्ठाद्यन्तपर्वसु ॥ ७७

शब्दादीनामाद्यवर्णं विन्यसेदन्तपर्वसु ।
गुणत्रयादिवर्णं च प्रत्येकं विन्यसेत् क्रमात् ॥ ७८

स्पर्शनादेव तार्क्ष्यात्मा हस्तो हन्याद्विषद्वयम् ।
एवं सकलितं ध्यायेदात्मानं गरुडात्मना ॥ ७९

तथैव पादहस्तानां भेदबुद्धिं न चिन्तयेत् ।
एवंविधं समालोक्य नागान्पश्यति साधकः ॥ ८०
पर्वते परमाणौ वा तस्य व्यापन्न विद्यते ॥ ८०॥

इति काश्यपीये श्रीमद्गरुडपञ्चाक्षरीकल्पे विषसंहारादि-
मन्त्रयन्त्रप्रयोगविधिः

पञ्चमोऽध्यायः

1. (क) नश्यन्ति. 2. (क) पापम्.

## षष्ठोऽध्यायः

काश्यपः—

स्थानं वक्ष्ये मृतस्यैव जीवकरं परम् ।
अङ्गुष्ठाङ्घ्रिसन्धिजानुगुह्यनाभिहृदि स्तने ॥ १
कण्ठनासाक्षिकर्णभ्रूमध्यशङ्खेषु मूर्ध्नि च ।
दक्षिणापार्श्वयोः पुंसः पक्षयोः शुक्लकृष्णयोः ॥ २
चरेत्सुधाकलारोहादवरोहः तिथिक्रमात् ।
सुधारोहावरोहौ तु पार्श्वयोर्व्यत्ययात् स्त्रियाः ॥ ३
सुधायास्सप्तमे स्थाने विषस्थानमिति स्मृतम् ॥ ३॥

आस्ते यत्रामृतमवयवे तत्रमर्दं विषघ्नं
तस्मिन्दष्टे यदि च गुलिकेनापि न स्याद्विषापत् ।
स्थाने यस्मिन् भवति गरलं तत्र चेन्मर्दनं स्यात्
क्ष्वेलस्तोमं वितरति मृतिं तत्र दंशश्शुभोऽपि ॥ ४॥

क्ष्वेले कण्ठगते निशाकरकलां कृत्वा गलस्थां भजेत्
भुक्तं स्याद्विषमन्यथा विषमपि प्रायोऽमृतं स्यात्तथा ।

अश्नन्नेवमहर्निशं बलमनस्तेजोऽङ्गपुष्ट्यादिभिः
जीवेद्दुःखजरापमृत्युपलितातङ्कादिमुक्तश्चिरम् ॥ ५॥

गुह्यं यदा याति सुधाकला सा-
ऽवश्यं तदा स्यात्प्रथमोप[1]योगे ।
भोगे सुधास्थानविमर्द[2]चुंबो-
ऽवश्यायशुक्रक्षरणं च त[3]स्य ॥ ६॥

स्थाने यस्मिन् सा सुधायाः कलास्ते
तत्स्थान् प्राणान् सन्ततं चिन्तयेद्यः ।
आयुः पुष्टिश्श्रीर्वपुस्सर्वसम्प-
त्तेजोरक्षाकान्तयस्तस्य सन्ति ॥ ७॥

औषधग्रहणं वक्ष्ये तत्क्रमं शृणु गौतम ॥ ८

यान्यौषधानि गृह्यन्ते विधानेन विना जपम् ।
तेषां तद्वीर्यहानिस्स्याद्विधिना सङ्ग्रहेत्ततः ॥ ९

सृष्ट्वा स्रष्टा प्रजास्तासां रक्षणेऽसृजदोषधोः ।
तद्रक्षार्थं च विदधे चन्द्रमा नाम देवताम् ॥ १०

1. (क) भोगे. 2. (ख) पुंसो. 3. (क) तस्याः.

तं प्रणम्यौषधीः पार्श्वे यवान् प्रक्षिप्य मुष्टिना ।
दश जप्त्वा मन्त्रमिमं [1]नमस्सूर्याय मन्त्रवित् ॥ ११
सुप्रभायै नम इति यवेनार्च्य महौषधिम् ।
झं सोमाय नम इति ठं चन्द्राय नमस्ततः ॥ १२
नमो महौषधायेति स्वाहान्तं प्रणवादिकम् ।
गन्धपुष्पादिसंयुक्तमक्षतैस्सम्यगर्चयेत् ॥ १३
येन त्वा विदधे ब्रह्मा येनेन्द्रो देवता इह ।
तेन त्वा हारयिष्यामि तिष्ठ तिष्ठ महौषधे ॥ १४
अनेन मनुना मन्त्री औषधं स्थापयेत्ततः ।
पश्चात्सूर्य[2]समायुक्तामोषधिं देवतामयीम् ॥ १५
ओं नमः पदमुच्चार्य ओषधीभ्यः परं पदम् ।
ऊर्जस्वत्यः पदं ब्रूयाद्धविष्यथ पदं वदेत् ॥ १६
तद्वीर्यैः पदमुच्चार्य कृत्स्नं कुरुपदं ततः ।
ध्वं मदं पदयुग्मं स्याद्धनयुग्मं वदेत्ततः ॥ १७
मारयद्वयमुच्चार्य तुभ्यं नम इति ब्रुवन् ।

---

1. (ख) अं नमः. 2. (ग) समायुक्तमौषधं देवतामयम्.

उद्धरेन्मनुना मन्त्री औषधं वीर्यवद्भवेत् ॥ १८
एकत्र विधिवत्कृत्वा तज्जातिर्वीर्यवद्भवेत् ।
गारुडेन शतावृत्या सर्वौषधिविधिस्स्मृतः ॥ १९
नागाकृष्टिमथो वक्ष्ये समासेनैव गौतम ।
सौदर्शनेन मन्त्रेण साक्षात्कृत्वा समाहितः ॥ २०
कवचास्त्रं निरुध्यैव ध्यानपूर्वं मनुं जपेत् ।
सर्पाह्वानं प्रकुर्वीत यन्त्रमध्यगतश्शुचिः ॥ २१
तारं तारानुतारं च चन्द्रबीजमतः परम् ।
क्ष्म्रूं बीजं हुंपदद्वन्द्वं फट्कारद्वयमेव च ॥ २२
आगच्छन्तु महानागा अनन्तगुळिकास्तथा ।
वासुकिश्शङ्खपालोऽन्ते तक्षकेति पदं वदेत् ॥ २३
महापद्मपदं चोक्त्वा कार्कोटकपदं वदेत् ।
पद्मेति पदमुच्चार्य गरुडस्य वदेत्ततः ॥ २४
विद्याङ्गानि पदं चोक्त्वा स्वाहामन्त्रमितीरितम् ।
मन्त्रेण सर्पानाहूय लिङ्गैर्जानातु दंशकम् ॥ २५

---

1. (क) क्षौम्.

तारतारानुतारं च नमो भगवते पदम् ।
गरुडाय पदस्यान्ते नागशत्रोः पदं वदेत् ॥ २६

एह्येहि भगवन्नागलोकमाक्रम्य तत्परम् ।
हन दह द्वयं वीप्सा [1]द्रावयद्वयमुच्चरेत ॥

हुरु युग्ममुरुद्वन्द्वं [2]किलिवीप्सा नमो नमः ।
इति ब्रूयात्ततो मन्त्री गोत्रमुत्सारयेत्ततः ॥ २८

नागसंरम्भमुच्चार्य आदीनां ? पदमुच्चरेत् ।
पटहद्वयमुच्चार्य ? [3]बन्धयुग्मं ततः परम् ॥ २९

मह्यं मोहिनि सान्निध्यं कुरु नस्तेजसे पदम् ।
प्रळयाग्निनिभं जं झं [4]ततो रणपदं ? वदेत ॥ ३०

जहि जातपदस्यान्ते वेधसे पदमुच्चरेत् ।
स्वाहान्तं पदमुच्चार्य नागाकृष्टिमनुं परम् ॥ ३१

आकृष्यमाणान्पादेन सर्पादीन्भयविह्वलान् ।
ध्यायन् पठेदिदं मन्त्रमागच्छन्तूरगादयः ॥ ३२

तत्रागतेषु तच्छक्त्या सर्पाखुविहगादिषु ।

[1]किञ्चिदेवं वदेन्मन्त्री दंशकाहिमिहानय ॥ ३३

असौ गत्वा तमारुह्य पुनरायाति भृ[2]त्यवत् ।
स्वयं विषं गृहाणेति प्रोक्तः कुर्यात्तथैव च ॥ ३४

वि[3]द्यैषा साधिता यस्य भार्यावद्वशवर्तिनी ।
एवमत्यद्भुतं कर्म सकुर्यादिन्द्रजालवत् ॥ ३५

सर्पोच्चाटनसामर्थ्यमन्त्रं वक्ष्यामि गौतम ।
तारतारानुतारान्ते नमो भगवते पदम् ॥ ३६

रौद्रायेति पदस्यान्ते सुपर्णपदमु[4]च्चरेत् ।
पतङ्गपदमुच्चार्य प्रेताधिपतये पदम् ॥ ३७

गुलुद्वयं गर्जयुग्मं नागांस्त्रासय वीप्सयुक् ।
भ्रामयद्वयमुच्चार्य मुञ्च मुञ्च पदं वदेत् ॥ ३८

मुह्य मुह्य पदं चोक्त्वा कड्ड कड्ड पदं वदेत् ।
आविशद्वयमुच्चार्य सुपर्णपदमुच्चरेत् ॥ ३९

पतङ्गगरुडं चोक्त्वा ज्ञापयति स्वाहया युतम् ।
रसातलं क्षोभयित्वा गोत्रमुत्सारयेदहीन् ॥ ४०

---

1. (क) कं चिदिति साधु. 2. (क) मृत्युं. 3. (ग) महं.
4. (क) मुद्धरेत्.

[1]रसातलक्षोभण एव सिद्धिः
प्रक्षोभयेत्तार्क्ष्यमनुर्भुजङ्गान् ॥ ४१

[2]वल्मीकादिर्भुजङ्गस्थानोपान्ते स्थित एव तत्
निर्गच्छेत्तत्तदुरगतस्तस्मान्निग्रहस्थानात् ॥ ४२

पञ्चावृत्तिर्वर्णवृत्या विलोमा
दुक्तोयं स्यात्तार्क्ष्यमन्त्रः क्षिपादिः ।
तज्जप्त्वाहिश्शर्कराभिर्विकीर्ण-
स्संघो गच्छेन्नेत्रकर्णो गृहादेः ॥ ४३

क्षिप क्षिप प्रक्षिप च तारापक्षियुगं वदेत् ।
[3]ओं स्वाहा मनुमावर्त्य पूर्ववत्क्रियया फलम् ॥ ४४

भूर्जे रोचनयालिख्य षडश्रं तद्बहिः पुनः ।
पञ्चपत्राब्जमालिख्य तन्मध्ये प्रणवं लिखेत् ॥ ४५
तदन्तर्विलिखेदस्त्रं [4]सर्पसंहारकारकम् ॥ ४५॥

कोणे कुरुकुले स्वाहा पत्रे मन्त्रं विलोमतः ।
[5]स्पृष्ट्वा शतं जपेन्मन्त्रो वल्मीकविवरे क्षिपेत् ॥ ४६॥

---

1. (ग) इदं पद्यार्धमे-वात्रास्ति 2. (ग) अशुद्धेयमार्या, कोशान्तरे नास्ति. 3. (क) स्वाहया मनु. 4. (क) सर्पसंरम्भ-कारणम्. 5. (क) स्पृष्ट्वास्पृष्ट्वा.

गृहे देवालये कूपे यत्र यत्र वसन्ति ते ।
तत्र तत्र क्षिपेद्यन्त्रं सर्पोच्चाटनकृद्भवेत् ॥ ४७॥

किञ्जल्कं लिपिपङ्कजस्य विवरे साध्याख्यबीजान्वितं
यक्षेट्दिग्यमशक्रपाशिषु मनोर्मध्ये च वर्णानपि ।
वाय्वग्न्योर्निऋतीशयोर्दिशिदले यादीन् लिखेत्तस्य वै
शिष्टेष्वष्टसु वर्गकाष्टकमिदं यन्त्रं फणिभ्यो वधः॥ ४८॥

एकात्मना यो विनतासुतेन
मन्त्रेण सम्मंत्र्य तु मन्त्रशक्तः.. .
उद्दामवीर्यौषधिलिप्तहस्त
स्सङ्क्रीडयेद्ध्यानपरो भुजङ्गैः ॥ ४९॥

आत्मरक्षां पुरस्कृत्य सर्पक्रीडां चिकीर्षयेत् ॥ ५०

टान्तजान्तौ च रान्तौ च णान्तनान्तौ विसर्गिणौ ।
नाभिहृत्कन्धरातालुललाटेषु च विन्यसेत् ॥ ५१

न्यस्याथ सर्गिणां नान्तं न्यस्येत्सर्वाङ्गसन्धिषु ।
तत्राङ्गदूषणीं विद्यां रक्षार्थं सम्य[1]गुद्धरेत् ॥ ५२

1. (क) गुच्चरेत्

अक्षिमातङ्गकेचोक्त्वेश्वरि सर्पपदं वदेत् ।
मुखशब्दं वदेत्पश्चान्निवारणपदं वदेत् ॥ ५३
शाङ्करी च पदं चोक्त्वा रेफान्ते शम्बरीपदम् ।
तत्परं कुक्कुटपदं मयूरेश्वरि पदं ततः ॥ ५४
पश्चाद्दूषय गां हास्याद्धुङ्काकारान्तमिमं मनुम् ।
अनयाचाङ्गदूषिण्या स्पृशेत्सर्वाङ्गमेतया ॥ ५५
एवं क्लृप्ततनुर्मन्त्री भुजङ्गैर्नाभिभूयते ।
सर्पान् संवीक्ष्य संस्तभ्य लिङ्गस्थानाशनादिभिः ॥
ग्राह्यान् विज्ञाय तैः क्रीडां विदधीत समाहितः ५६॥
ग्राह्याः पद्ममहापद्मशङ्खशेषान्वयोरगाः ॥ ५७
ह्रस्वदीर्घकृशस्थूलानिति पूर्वादिलक्षणात् ।
पञ्चैतान् फणिनो गृह्यात् ? लक्षणेन विसर्जयेत्॥५८
.ग्राह्यस्याहेर्मुखे मन्त्री कल्पयेदाहारभुतिना ? ।
हिङ्गुशिग्रुवचाव्योषनीलीदुग्धशिफायुतः ॥
काये हस्ते समालिप्य क्रीडेत्सर्पेण सधकः ॥ ५९॥

---

1. (ग) त्वाक्षरि. 2. (क) शङ्किनी. 3. (क) लंबरी. 4. मधुरेश्वरि. 5. (क) ग्राह्याः परं महापद्म. 6. (ग) इदमर्धमन्यत्र न. 7. (क) हिङ्गु शुक्रबला.

सर्पस्य दंशंदन्तौ तु मार्जारस्य नखेन वा ॥
गोधांकपोतचटकनखैराच्छादयेच्छनैः ॥ ६०॥

कृत्वा वक्राङ्गुलिं हस्तमृजुं कृत्वा तु मध्यमम् ।
तदग्रे पृथिवीं ध्यात्वा न्यस्यास्ये स्तम्भयेदहिम् ६१॥

कृत्वा हस्तमनुत्तास्तु ? अङ्गुली विवृता अपि ।
मध्यमानामिकाभ्यां च भुजङ्गस्योन्नतिं हरेत् ॥ ६२॥

तलं कृत्वा फणाकारं संहताकुञ्चिताङ्गलिम् ।
हस्तं भुजङ्गमाकारं ध्यात्वा संस्तम्भयेदहिम् ॥ ६३॥

अङ्गुलिस्फोटनेनाथ सर्पस्य मुखपार्श्वयोः ।
शिखिपिञ्छेन वा कुर्यात् सर्पक्रीडां समाहितः ६४॥

हनुगण्डगलस्थौल्यं फणाल्पत्वं विवर्णता ।
उद्वर्तनं च दंशेच्छा लिङ्गान्येतानि भोगिनः ॥ ६५॥

पात्रेणाहिमवष्टभ्य मार्जारनकुलादिभिः ।[1]
तान् दृष्ट्वा वा स्थित इति ध्यानाद्रोगी न गच्छति ॥
ऊर्ध्वाधःकल्पिताभ्यां च भूवेश्मभ्यां निरोधितः ॥ ६७ .

---

1. (क) मार्जारककुभादिभिः.

तारां कुरु पदं कुले वर्मास्त्रं विद्ययानया ।
संयुक्तेन समारेण षिद्धस्स्तब्धो भवेदहिः[1] ।
प्रादक्षिण्येन सिकताताडितोहिर्न गच्छति ॥ ६८॥

कौटिल्यं भोगसङ्कोचः श्श्वासो नेत्रार्धमीलितम् ।
गूहनं स्वल्पचेष्टा च दंशचोरस्य लक्षणम् ॥ ६९॥

पूर्वपार्श्वद्वयं पृष्ठेत्त्वादिशन्ति द्विजातयः ।
अशक्त? पन्नगीदष्टे सर्पदष्टे फलं भवेत् ॥ ७०॥

पूर्वाह्ने वापराह्णेवा दष्टे शक्तिर्बलं क्रमात् ॥ ७१
निशावासरसन्ध्यासु बलवत्यस्त्रियादयः ।

एकाङ्गुलं स्यादष्टानां मध्यं बालेन दं शितम् ॥ ७२
सर्पेण द्व्यङ्गुलं यूनावृद्धेनत्र्यङ्कुलं भवेत् ।
पूर्वाह्ने बलवान् बालो मध्याह्ने च युवा बली ।
वृद्धोऽपराह्ण इत्येवं विद्यामात्रेण तद्बलम् ॥ ७३॥

विप्रराजोरगविषमनुवर्तनया-हरेत् ।
अन्यत्सर्पविषं विद्वान् बलात्कारेण संहरेत् ॥ ७४॥

---

1. (ग) इदमर्धं कोशान्तरे नास्ति. 2. (ग) च लंभयेत्.
3. (ग) विद्याद्रांत्रौ च.

भुक्तकालमनन्तादीन् वाराणां तु विधीयते ॥ ७५

शनिवारस्य रात्र्यादौ षद् भागः पञ्च तत्परम् ।

चतुरष्ठ तथासप्त त्रिंशत्काल मितोरितम् ॥ ७६

तद्वारं सप्तधा कृत्वा शेषादीन्याजयक्रमात् ॥ ७६॥

अङ्गुष्ठाङ्घ्रिषु जङ्घोरुनाभिहृङ्गलमूर्धसु ।

गात्राण्येतानि शेषादिनागानां योजयेत्क्रमात् ॥७७॥

एवं कृत्वा तु मतिमानयत्नेन विषं हरत् ॥ ७८

इति काश्यपीये गरुडपञ्चाक्षरीकल्पे सर्पक्रोडा

लक्षणादि विधिः ।

षष्ठोध्यायः ।

---

1. (क) निशाच

न्विनियोजयेत्. 4. (...

## सप्तमोऽध्यायः ।

शेषादिमन्त्रान् वक्ष्यामि शृणु गौतम सुव्रत ।
ओमंपदमथोच्चार्य कं खं गं घं पदं वदेत् ॥ १

ओं खुरु द्वयमुच्चार्य चययुग्ममनन्तरम् ।
अनन्तपदमुच्चार्य विषंहरपदं वदेत् ॥ २

संक्षिप हः प्रक्षिप हः अनन्तहृदयाय पुः ।
स्वाहान्तं मन्त्रमुच्चार्य शेषस्थानं विमर्दयेत् ॥ ३

श्रुतमन्त्रमयत्नेन भेरीशब्दादिनिस्वनात् ।
अनन्तान्वयजाताहिदष्टस्याशु विषं हरेत् ॥ ४

ओं इं पदमथोच्चार्य चं छं जं झं पदं वदेत् ।
ई हूं जं वासुकिं चोक्त्वा विषं हरपदं वदेत् ॥ ५

संक्षिप हः प्रक्षिप हः वासुकीहृदयाय पुः ।
स्वाहान्तं मन्त्रमुच्चार्य तत्स्थानं मर्दयेद्बुधः ॥ ६

अशब्दीशब्दभाषेण वासुकेर्विषनाशनम् ।
ओं उं पदमथोच्चार्य टं ड्डं ढं पदं वदेत् । ७

ओंऊं पदमथोच्चार्य तक्षकेतिपदं वदेत् ।
विषं हर पदं चोक्त्वा संक्षिप हः पदं वदेत् ॥ ८
प्रक्षिप हः पदं चोक्त्वा तक्षकेतिपदं वदेत् ।
हृदयाय पदं चोक्त्वा पुः स्वाहामन्त्रमीरितम् ॥ ९
अब्रह्मण्यपदं चोक्त्वा अविद्यापदमुच्चरेत् ।
पदद्वयान्वितं मन्त्रं तक्षकस्य विषं हरेत् ॥ १०
ओं ऋं पदमथोच्चार्य तं थं दं धं पदं वदेत् ।
ऋ स्फाटपदमुच्चरेत् ॥ ११
हुं फट्कार्कोटक विषं हर संक्षिप हः पदम् ।
प्रक्षिप हः पदं चोक्त्वा कार्कोटकपदं वदेत् ॥ १२
हृदयाय पदस्यान्ते पुः स्वाहामन्त्रमीरितम् ।
गृध्रशब्दसमायुक्तं कार्कोटकविषं हरेत् ॥ १३
ओं लृं पदमथोच्चार्य पं फं बं भं पदं वदेत् ।
लृं दह द्वय मुच्चार्य छिन्द मुञ्च द्वयं वदेत् ॥ १४
अहो पद्म विषं चोक्त्वा हर संक्षिप हः पदम् ।
प्रक्षिप हः पदं चोक्त्वा पद्मशब्दमथोच्चरेत् ॥ १५

हृदयाय पदस्यान्ते पुः स्वाहामन्त्रमारितम् ।
मर्जितं सूकरसमं पद्मान्वयविषं हरेत् ॥ १६

ओं एं पदमथोच्चार्य यं रं लं वं पदं वदेत्
ओमैं पद्म महापद्म विषं हर पदं वदेत् ॥ १७

ओं ऐं पदमथोच्चार्य महापद्मपदंवदेत् ।
संक्षिप हः प्रक्षिप हः महापद्मपदं वदेत् ॥ १८

हृदयाय पदस्यान्ते पुस्स्वाहामन्त्रमुच्चरेत् ।
गृहदाहादिकथनाद्गीतवाद्यस्वरादपि ॥ १९

महापद्मान्वयविषं मर्दनेन विनश्यति ।
ओं ओं पदमथोच्चार्य शं षं सं हं पदं वदेत् ॥ २०

औं हं सः शङ्खपालान्ते विषं हर पदं वदेत् ।
संक्षिप हः प्रक्षिप हः शङ्खपालपदं वदेत् ॥ २१

हृदयाय पदस्यान्ते पुस्स्वाहामन्त्रमुच्चरेत् ।
द्यूते वराटिकोत्तानभङ्गस्तद्विषहा भवेत् ॥ २२

भुक्त्वैकविंशतिग्रासान्यदि भक्तस्य मन्त्रितात् ।
क देहीत्युदितो दष्टो निर्विषाऽम्भः प्रयच्छति ॥ २३

यां कामपि कथां तत्र विषघ्नीमथवा वदेत् ।
शङ्खपालान्वयविषं मन्त्रेणानेन नाशयेत् ॥ २४
ओं अं पदमथोच्चार्य ळं क्षं अःपदमुच्चरेत् ।
कुरुद्वयं क्षुद्वयं च चुळुयुग्मं वदेत्पदं ॥ २५
गुळिकेति पदस्यान्ते विषं हर पदं वदेत् ।
संक्षिप हः प्रक्षिप हः गुळिकेति पदं वदेत् ॥ २६
हृदयाय पदस्यान्ते पुस्वाहामन्त्रमुच्चरेत् ।
शर्करा राजिका चाम्भो मन्त्रेणानेन मन्त्रितम् ॥२७
क्षिप्त्वा दिगन्तरे सद्यो गुळिकाहिविषं हरेत् ।
शुक्लाष्टम्यां त्रीण्ययुतं सिध्यै नागमनुं जपेत् ॥ २८
शालिपिष्टं गुळं सक्तु नाळिकेरजलं ददेत् ।
तत्प्रसादेन शेषाद्यन्वयजं संहरेद्विषम् ॥ २९
स्वनामवज्जपेन्मन्त्रं स्वं स्वं स्थानमुपस्पृशेत् ॥ ३०
शेषादिकाले दष्टानां हरेत्क्ष्वेळितमादितः ।
एवं कृत्वा तु मतिमानयत्नेन विषं हरेत् ॥ ३१

इति काश्यपीये श्रीमद्गरुडपञ्चाक्षरीकल्पे
सप्तमोऽध्यायः ।

# अष्टमोऽध्यायः

दर्वीकरा मण्डलिनो राजलिर्वैतकास्तथा ।
दर्वीकरेण दष्टस्य शृणु रूपाणि गौतम ॥ १
मुखं पाण्डु भवेत्पातदंशश्च परिदूयते ।
दाहश्च जायते तस्य निद्रा चैव प्रबाधते ॥ २
वेपन्ते चास्य गात्राणि सततं च विजृम्भते ।
तत्रौषधं प्रवक्ष्यामि येन संपद्यते सुखम् ॥ ३
[1]नस्याञ्जनादिलेपैश्च पानभक्ष्यादिना ततः ।
पाटलीबिल्वमूलं च शिरीषं च तथार्ककम् ॥ ४
द्वे हरिद्रे च माञ्जिष्ठां तगरं चन्दनं तथा ।
सरलं चैव लोध्रं च कृत्वा मूत्रेण पेषयेत् ॥ ५
अञ्जनं चैव नस्यं च मृतसञ्जीवनं परम् ॥ ५॥
अङ्कोलमूललवणे द्वे बृहत्यौ पलानि च ।
कटुत्रयं च सिद्धार्थं गृहधूमं तथैव च ॥ ६॥

एतानि समभागानि कृत्वा तोयेन पेषयेत् ।
अञ्जनं चैव नस्यं च मृतसञ्जीवनं परम् ॥ ७॥

ईश्वरा कदली नागी चन्द्रास्येव घनस्विनी ।
निर्गुण्डी चेति वर्गोऽयमेकदैव पृथक् पृतक्• ।
अञ्जनं चैव नस्यं च मृतसञ्जीवनं परम् ॥ ९

शिरीषपुष्पस्वरसेन भावितं
सहस्रकृत्वो मरिचं सिताह्वयम् ।
प्रयोजयेदञ्जननस्यलेपनं
पानं च कृत्वा गरलाशनिस्स्यात् ॥ १०

किंशुकपत्ररसं नसि दद्यात्
पात ? विषं विनिहन्ति च शीघ्रम् ।
औषधराजसकायजलेन
दार्विविषं शमयेत् क्षणमेव ॥ ११

चुञ्चुन्दरीत्यविगृहीतवधक्रमेण ?
व्यूषं च हिङ्गु लशुनं समभागमेव ।

एतानि चूर्णविहितं विषस वै ? नश्येत्
सा ? चूर्णनासिकमिति प्रतिपूरणेन ॥ १२

श्वेतार्कमूलं गिरिकर्णिकायाः
गृहाम्बवालं लशुनं च कोष्ठम् ।
नस्यं चरेत् प्राणवियोगकाले
प्युत्तिष्ठते वासुकिनापि दष्टः ॥ १३

रम्भाम्भसा भावितमश्वगन्धा
वचा शिरीषं कटुकत्रयं च ।
नस्याञ्जनानि क्रिययोपयोगा-
दुत्तिष्ठते वासुकिनापि दष्टः ॥ १४

शिरीषबीजपुष्पार्कक्षीरबीजकटुत्रयम् ।
विषं विनाशयेत्पानलेपनस्याञ्जनादिना ॥ १५

कतकाक्षिरसे वस्त्रशकलं भावयेच्चिरम् ।
विषं हरति नस्येन शुष्कं तैलविमर्दिम् ॥ १६

सहिङ्गुशक्रकोपेन ? पाणिना वक्रनासिके ।
विधायाथ स्पृशेदेवं त्रिः कुर्याद्विषशान्तये १७

हिङ्गुपीतार्कवक्राम्भोनस्यादुत्तिष्ठते विषी ।
क्षीरं हयारिमूलेन लवणानि गदाशिनिः ॥ १८
नस्येन विषहृद्यष्टिबिसक्षो ? हृद्दलं तथा ।
निर्गुण्डाग्निकवैकुण्ठे ब्राहावल्लीरसा समा ?।
व्योषहिङ्गुवचायुक्तं विषं नस्यादिना हरेत् ॥ १९॥
गृह्धूमनिशायुग्मसलिलं तण्डुलीयकम् ।
हरीतकी वचा लोध्रहिङ्गुनिम्बदलान्वितम् ॥ २०॥
विषाम्भश्शिग्रुमूलत्वग्द्रोणाम्भो रामठोषणा ।
समभागीकृतं सर्वं नस्यादि विषनाशनम् ॥ २१॥
सगुञ्जाहिङ्गुवकुलशिग्रुत्वग्रससंयुतम् ।
वाहवल्लीरसो हिङ्गु वचा मरिचिमिश्रिता ।
द्वयं नस्यादिना कृत्वा विषघ्नं परमौषधम् । २३
सगुञ्जास्थि शिफावह्नि शिखाहिङ्गु शिवोदकम् ।
नस्याञ्जनाद्विषं हन्यात्कालकूटमपि क्षणात् ॥ २४
* शिरीषत्वक्त्रिकटकं वचारम्भाबुभाबिता ।

---

* इति नस्य प्रकरणम् इति (ख) कोशे.

खारीवेगकरञ्जास्थिव्योषनिम्बशलाटयुक् ।
नस्याञ्जनादिना हन्याद्विषं स्थावरजङ्गमम् ॥ २५॥

कोशातकीवचाहिङ्गुशिरीषार्कपयोयुतम् ।
कटुत्रयसमेषाम्भो हरेन्नस्यादिना विषम् ॥ २६॥

रामठेक्ष्वोरुसर्वाङ्गं चूर्णं नस्याद्विषापहम् । २७

विषं हन्ति शिफा वह्निशिखाविजयरागयोः ।
द्रोणान्वितानगण्डीरेरसं ? नस्याद्विषापहम् । २८
मातृघाति सुहिक्षाम्बु ? भाविता विषनाशिनी ॥२८॥

कपोतकपिमार्जारगोधानकुलपोत्रिणाम् ।
समस्तशिखिनां पित्तं क्षौद्रीशृङ्गीस्थितं तथा ॥ २९॥

नस्याञ्जनादिना हन्याद्विषं स्थावरजङ्गमम् ॥ ३०

खारीहिङ्ग्वग्निकाव्योषनस्यमावेशकृद्भवेत् ॥ ३०॥

शिरीषमाधवीगुञ्जाहेमबीजं वचोषणे ।
त्रपुषार्कं ,दृक्मूलं ? भृङ्गीमूत्रं विषं हरेत ॥ ३१॥

इति नस्याञ्जनोभयप्रकरणम्.

## अथाञ्जनप्रकरणम् ।

मांसीचन्दनसिन्धूत्थकृष्णयष्ट्युत्पलोत्पलैः ।
समूत्रैरञ्जनं सद्यो विषसुप्तप्रबोधनम् ॥ ३२॥

वेषाम्भस्सुरसापुष्पकरञ्जास्थिकटुत्रयम् ।
द्विनिशाबिल्वपञ्चाङ्गं पूर्ववत्स्यात्तदञ्जनम् ॥ ३३॥

शिरीषनिम्बसक्काथ वेगकोशातकीफलम् ।
सवत्साश्वारिहेमार्कस्नुहीमूत्रं विषापहम् ॥ ३४॥

नतोषणनिशादारुकरञ्जार्कशिला मधु ।
यष्टि ? शिरीषकृष्णाश्च गणोऽयं विषसूदनः ॥ ३५॥

शिरीषैलानिशालाक्षामांसीयष्टिकरेणुकम् ।
लवणानि त्रिवृद्यष्टिविशालात्र्यूषणं निशे ।
एतौ समधुमाञ्जिष्ठौ गोशृङ्गस्थौ विषापहौ ॥ ३७

शिलालं चन्दनं कुष्ठं [1]त्वक्तैलाभ्रमञ्जकम् ? ।
सुरसे हव्यवक्रासृक् मांसीराजीतृणांशिता ॥ ३८
हिङ्ग्वम्बुरोचनास्पृक्का (का) क्रान्ता च विषहृद्गणः ॥
कौन्ती कुष्ठं नतं व्योम सुरसा शारिबाथनः ।

---

1. (ग) त्वर्क्कतैलाभ्रपद्मकम्.

हेला हिङ्गुवचायष्टि विळङ्ग सिन्धुमाक्षिकाः ॥ ३९॥
प्रालाशक्षारजे तोये पच्यमाने क्षिपेदिमान् ।
किञ्चिल्लीढा विषहरा गोशृङ्गस्था विषक्रिया ४०॥

इति अञ्जनप्रकरणम्.

अथलेपनप्रकरणम् ।

निर्गुण्डिकापर्णरसेन सार्धं
संभाव्यं शुभ्रं लशुनं च सार्कम् ।
आलेपनं चैव सदष्टकानां
क्षिप्रं विषं.हन्ति च वासुकीनाम् ॥ ४१॥

वकुलास्थिमज्जा सह यक्षदन्तं
स्तन्येन पिष्ट्वा त्वनुलोमलेपः ।
दर्वी च लूतामहमण्डलीनां
विषं विशेषादचिरेण हन्ति ॥ ४२॥

तिन्त्रिणीजलसंयुक्तं शङ्खचूर्णानुलेपनम् ।
तक्षकेणापि दष्टस्य शीघ्रं विषविनाशनम् ॥ ४३॥

स्नुह्यर्कक्षीरल्लवणे रामठं काकुजीरकम् ।

पैशाचपत्रसारेण लेपनं विषनाशनम् ॥ ४४॥

सशुण्ठीलशुनलाक्षाहिङ्गुनिशाद्वयम् ।
शजीमातुलमूत्राढ्यं हरेल्लेपादिना विषम् ॥ ४५॥

व्योषाश्वारिवचानीलीमूलतैलान्वितं तथा ।
उच्चाटपयसा खार्याः विह हव्य ? ग्लेपनं भवेत् ४६॥

तगरुं केसरः कुष्ठवचोन्मत्तास्थिचन्दनम् ।
तण्डुलाम्बु च तल्लेपो भवेद्विषविसर्पहा ॥ ४७॥

इति लेपनप्रकरणम्.

अथपानप्रकरणम् ।

मयूरपित्तेन च तण्डुलीयकं
काकाण्डयुक्तं प्रपिबेदनल्पम् ।
विषाणि सस्थावरजङ्गमानि
सोपद्रवाण्यप्यचिरेण हन्ति ॥ ४८॥

तैलं तिलानां पललं गुलं च
क्षीरं तथार्कं सममेव पीतम् ।
अलर्कमूलं विषमाशु हन्ति
विषाणि सस्थावरजङ्गमानि ॥ ४९॥

श्वेतार्कमूलं कुटजस्य बीजं
कोशातकीजातिरसेन पिष्टम् ।
अलर्कमूलं विषमाशु पाना-
दुत्तिष्ठते वासुकिनापि दष्टः ॥ ५०॥

गवां शकृद्रसं सर्पिस्सहितं पाययेद्बुधः ।
हृदयावरणं नाम जीवरक्षाकरं परम् ॥ ५१॥

इतिपानम् ।

अथ भक्ष्यप्रकरणम्.

बृहत्पिप्पलिकापत्रं लवणं समभावितम् ।
एतद्भक्ष्यं च दातव्यं विषवेगो न विद्यते ॥ ५२॥

इन्द्रवल्ल्यग्निरुद्रेण तुलसीदेविका सह ।
तद्रसार्कं त्रिकटुकं चूर्णं भक्ष्यं विषापहम् ॥ ५३॥

इति भक्ष्यम् ।

अथ गुलिकाप्रकरणम् ।

पञ्चाङ्गं कृष्णपञ्चम्यां तृतीयस्यायसा विना ? ।
गृहीत्वा मूत्रपिष्टैस्तैर्विषघ्नी गुलिका कृता ॥ ५४॥

छायाशुष्काः शक्तिमत्यस्सर्वत्र गुलिकाः स्मृताः ॥ ५५

जातवत्संशकृन्मूत्रवर्तिलेपो विषं हरेत् ।

हिङ्गुलं लशुनं व्योषं धान्या ? मृद्वलिकास्तथा॥ ५६

शिरीषपुष्पश्लेष्मातकरञ्जनततर्णिका ।

मायूरसारव्याघातं शाब्दिका माक्षिका वचा ॥ ५७

पित्तानि मेषनकुलबिडालशिखिपोत्रिणाम् ।

तैः कृता गुलिका हन्यात्सर्वक्ष्वेलग्रहादिकम् ॥ ५८

इति गुलिका ।

इति काश्यपीये अष्टमोऽध्यायः ।

## नवमोऽध्यायः ।

---

[1]मण्डलिना तु दष्टस्य शृणु रुपाणि गौतम ।
पित्तंदोषसमायुक्तस्स्वेदहिक्काविमोहितः ॥ १

उष्णस्सशोफः पीतश्च दंशो मण्डलिनः [2]पृथुः ।
घोणसानां चिकित्साथ व्यस्ताव्यस्ता च कथ्यते ॥ २

श्वेतकुष्ठ[3]महानाम भूमिसूचिस्तथैव च ।
हेमरोगमसृक् शोफरङ्गमण्डलिते दश ॥ ३

त[4]द्दङ्गमण्डलीषङ्कमेवं षोढश कीर्तितम् ।
तत्रौषधं प्रवक्ष्यामि येन संपद्यते सुखम् ॥ ४

नवनीतं दधि मधु सैन्धवं च कटुत्रयम् ।
एतन्मण्डलिदष्टानां पानेन विषनाशनम् ॥ ५

[5]सूदं कदम्बमाज्येन पिष्ट्वा भक्षेदनुर्जलम् ।
रक्तपाण्डुश्च चित्राणां मण्डलीनां विषापहम् ॥ ६

---

1. मण्डलीनामिति सर्वत्र. 2. (ख) पृथक्. 3. (क) सहानाम. 4. (क) तद्दंश. 5. (क) सूदकदंबभक्षितपानिति-पृष्ठम् । रक्तसितास्थिमण्डलिदष्ट विषापहं दृष्टम्. इति दृश्यते.

शुण्ठीमरिचपिप्पल्या सैन्धवं समभागकम् ।
नवनीतेन लेपेन मण्डलीनां विषं हरेत् ॥ ७

श्वेतमण्डलिनो गात्रश्वयथुर्दंशवेदना ।
शिरोक्षिरुक्पार्श्व[1]वर्णभेद उर्वारुकं ? तथा ॥

नवाद्भिः कफनिर्यासं पक्त्वा लिम्पेत्पिबेदपि ।
कुष्ठमण्डलिनः कुष्ठव्रणानि त्वग्विवर्णता ॥ ९

वेगाकल्के महारक्तपुच्छं खारियुतं न्यसेत् ।
व्रीहिस्थं त्रिदिनं कृत्वा खार्या पिष्ट्वा द्वयं लिपेत्॥ १०

[2]कुटिलस्योरगस्येवं दंशस्य परितो रुजा ।
श्लेष्मातकशिरीषत्वक्खार्या लेप्या सगैरिका ॥ ११

[3]सुपर्णवेगयोर्मूलमाज्येन पयसा पिबेत् ।
महामण्डलिनो [4]मूर्च्छारोगारोचौ मनोजलम् ॥ १२

स्कन्धप्रदेशो वातश्च [5]सुपक्वमजदुग्धयुक् ।
कांस्ये पक्त्वाशये [6]त्सोष्णं विषहृच्छर्दिरेचनात् ॥ १३

---

1. (क) शिरोरुक्पार्श्वयोः. 2. (क) कुटिलास्याग सुनिस्स्युः. 3. (ख) सुगन्धि. 4. (क) मूर्धे. 5. (क) सुपाकमज दुग्धयुक्. 6. (क) कोष्णं.

पाणौ कुक्षौ तथा तत्स्याद्भुक्तमन्यांवषेर्ष्वपि ।
भ्रममण्डलिनश्चेष्टा नासादष्टयोर्जलस्रवः । १४
ज्वरशोफौ शिरोरुक्च जवूत्वक्पुङ्खमूलयुक् ।
खार्या पेया चिरायत्वक् का ? समूलसरीदलौ ॥ १५
सोदुम्बरत्वचौ लिम्पेदाघ्राणे धूपयेच्छनैः ।
महामण्डलिनोदंश उपर्युपरि शुष्यति ॥ १६
बहुमूत्रं पिपासोच्चैरपाङ्गावरुणे दृशौ ।
कदलीमूलमाम्रत्वक् दर्भोशीरौ च मस्तुका ॥ १७
लिम्पेत् पिबेच्च तां तीक्ष्णघोणसव्यसिरां स्फुटां ।
दन्ताः कटकटा जिह्वा निश्चेष्टा नेत्रवेदना ॥ १८
वेतसार्जुनयोश्चर्म संरावासी[2] गुलं लिहेत् ।
वेगाफल्गुपलाशास्थि खार्या लिम्पेत् पिबेदपि ॥ १९
कृष्णस्य ज्वरहृच्छैत्यशिरोरोगादिवर्धिता ? ।
पथ्यामलकगुञ्जास्थि शुण्ठीं प्रक्षिप्य पाचयेत् ॥ २०
प्रस्थांभोष्टांशशिष्टं तत्तावदाज्यान्वितं पिबेत् ।

---

1. (क) साम्ने. 2. (क) सुराठास्थि.

दंशैवान्ते व्रणानि स्युर्यदि तस्याग्निदग्धवत् ॥ २१
कपोतिरुक्कपित्थास्थि विश्वाभूर्गिरिकर्णिका ।
खार्या लिम्पेत् क्षते शुक्तैः पर्णैरक्षाश्वमारयोः ॥ २२
तण्डुलीभस्मसंयुक्तैरङ्गं लिम्पेच्च धूपयेत् ।
पिशाचस्य रुजाङ्गानां वैवर्ण्यमतिवेदना ॥ २३
असम्बद्धं वचोऽल्पं च दाहश्चेष्टा पिशाचवत् ।
पीतार्कपर्णकृष्णास्थिफलं नस्येत्सकाञ्चिकम् ॥ २४
तण्डुलोग्रतरामूलं वकुलस्य च चन्दनम् ।
लिम्पेदाज्येन तक्रेण दहेद्दंशं च सर्पिषा ॥ २५
सरक्तपुच्छं श्यामादिपुच्छं खार्या प्रलेयेत् ।
हेममण्डलिनो जिह्वा शुष्का कुरकुरायितम् ॥ २६
वैवर्ण्यमुदराध्मानं पीते नेत्रे शिरोगदः ।
सिञ्चेन्नास्या[1] दशौ शुण्ठी मृद्वीका[2] तुलसी मधु ॥ २७
कुण्डलीं[3] महिषीक्षीरं तण्डुलोदनमाशयेत् ।
दंशे क्षौद्रोषणं लिम्पेद्विसर्पस्याक्षिविभ्रमः ॥ २८

1. (ग) न्नसि. 2. (क) मृत्तिका. 3. (क) कुलस्थ.

वमनारोचकौ दाहः पूर्वाह्णे शैत्यमन्यथा ।
गात्राणां कम्पनं जाड्यं विसर्पपुलकानि च ॥ २९
गिरिकर्णी वचाविश्वाकुण्डलोषणकाञ्जिकम् ।
लिम्पेत् सिञ्चेन्नसि क्षौद्रं गिरिकर्णिकयान्वितम् ३०
पीतं नेत्रस्य बाधिर्यं पाण्डुता नेत्रवेदनाः ।
रोमकूपेष्वसृक्स्रावस्सलिलं नेत्रनासयोः ॥ ३१
अशक्तिरग्निमान्द्यं च लिंपेत्वार्या द्विपत्रकम् ।
नागरं मरिचं चिञ्चा शिग्रुमूले वचां लिपेत् ॥ ३२
कोशातकीरसैर्वेगां लाङ्गली जातवत्सविट् ।
पेयं लेप्यं च पयसा वचामाज्येन वा पिबेत् ॥ ३३
रोमंमंडलिनः कंडूनेत्रमान्द्यास्यतिक्तता ।
निर्वेदो जानुनी ? शैत्यं तीक्ष्णाग्निर्देहरक्तता ॥ ३४
हृदौष्ण्यं रोमविश्लेषः पुष्पमूले शिरीषजे ।
लाँगलीमूलकोशातिरसा धे ? पानलेपने ॥ ३५
खर्यांर्द्धिमातुळोन्मत्तवेतकीमूलनागरान् ।

1. (क) द्विवक्त्रं. 2. (क) रोग.

लिंपेद्विश्ववचाहिंगुवेगास्थिलशुनान्वितम् ॥ ३६
सार्कपत्रं शक्रवल्लीमूलं लिंपेत्पिबेत्तया ।
कुंभेमण्डलिनो वाणी गद्गदा चानुनासिका ॥ ३७
तृष्णादिवेदना शोषः पारवश्यं विजृंभिका ।
ज्वरेश्शिरोरुहजा जिह्वाकंपनं क्रिमि ? शीतता ॥ ३८
रुजा दहनदेहेच्छा शावो विश्लेषु ओष्ठयोः ।
मयूरपित्तलवणान्युशीरगिरिकर्णिके ॥ ३९
पिबेल्लिंपेच्च पयसा नीलीपाठाश्ववैरिणाम् ।
मूलं व्योषं च तैलेन पाययेल्लेपयेदपि ॥ ४०
शिरीषपञ्चकं हिंगु सैन्धवं द्विमुखोरगम् ।
मूलं निर्गुण्डिकायाश्च खार्या लिंपेत्पिबेदपि ॥ ४१
असृङ्मंडलिनो वक्त्रनासिकादेरसृक्स्रवः ।
तन्द्रीदौर्गन्ध्यनिर्वेदाः पारवश्यं च जागरः ॥ ४२
लिहेत्कुष्ठदधिव्योषं सिन्धुतक्रोत्थमाक्षिकम् ।
नीलीमूलं सनिंबत्वक् चर्वित्वा तज्जलं पिबेत् ॥ ४३
तत्क्वाथमथवानिंबत्वक् क्षीरं पानलेपनम् ।

मूलैः पुनर्भवांबष्ठामुसलाकिंशुकोद्भवैः ॥ ४४
लेपनादीनि कर्माणि कारयेत्सशकृद्रसैः ।
सक्षीरं क्षीरवृक्षाणां कषायं ससिता कणा ॥ ४५
शीतलं पिबता नश्येदसृङ्मण्डलिनो विषम् ।
शोफ (गोप) मण्डलिनो गात्रगौरवं श्वयथू रुजं ॥ ४६
अशक्तिस्स्तंभनं जाडयं पावरश्यमरोचकम् ।
स्थिरया योष ? दोषाभ्यां खार्या पंचाम्रचर्मणा ॥ ४७
महिषीशकृदुन्मत्तकल्काभ्यां चोपनाहयेत् ।
अभ्रकं व्रीहिशुभ्रांश्म कोद्रवं दधिपेषितम् ॥ ४८
जंबीरस्य रसे पक्वं शोफ[1]हृत्सिन्धुयुक्पिबेत् ।
ले[2]पोत्तुषं नारिकेळरसो मंडलिशोफहृत् ॥ ४९
वातास्थावन्त्यपार्श्वौ सदृग्योनी शुक्लमंबुमत् ।
क्षपैस्स्वामन्त्रमुदितं ? सर्वमण्डल (शोफ) दोषहृत् ५०
सुं क्ष्मं लं षं क्षडित्येवमानन्दाख्याणपञ्चकम् ।
शेषमंत्रमिति प्रोक्तं घोणसाखुविषं हरेत् ५१

1. (ग) शोषयेत्सिन्धु. 2. (क) लेपात्तुषण्णारि.

[1]भूं हुं हर विषं ह्रूं मूं स्याद्विषं पक्षियुगं वदेत् ।
वसुन्धरापदंस्यान्ते विवरं गच्छ गच्छ च ॥ ५२
ठः पदद्वयमुच्चार्य पुः पदद्वयमुच्चरेत् ।
हुं पदद्वयमुच्चार्य स्वाहान्तं [2]मन्त्रमुत्तमम् ॥ ५३
दष्टो मण्डलिरूपी (पे) तु पोत्रिणा धावितो भवेत् ।
वह्नौ प्रविष्टं तं दग्धं ध्यायन् मन्त्रमिमं जपेत् ॥५४
नमो भगवतेत्युक्त्वा खेटकेति पदं वदेत् ।
सहस्रभुज तस्यान्ते सहस्रपदमुद्धरेत् ॥ ५५
नेत्र उल्काविषमुख विषं दह हंन द्वयमुच्चरेत् ।
विषं[3]भोजन तस्यान्ते वज्रहस्तद्वयं वदेत् ॥ ५६
हनद्वयं हुं द्वयं मुष्टिबन्धनं चोच्चरेत् ।
पश्चाद्विषं समुच्चार्य धर लवेति चोच्चरेत् ॥ ५७
पक्षि हुं फट् द्वयं चोक्त्वा भोस्स्वाहा प्रणवादिकम् ।
अङ्गमण्डलिना दष्टं ध्यात्वा मण्डलिनिग्रहम् ॥ ५८
तं खादन् सूकरो भूत्वा जपेदेतद्विषापहम् ।

---

1. इदमर्धं सर्वत्रैकरूपं. 2. (ग) एतदाद्यर्धत्रयंनास्ति.

भूम्यां गच्छ विषान्मुक्तः पुरस्वाहा प्रणवादिकम् ॥
द्रं शेन निर्यतो वेदामूर्धतः ? कृष्णमूम्रकान् ।
डुण्डुभं त्वनुधावन्तं ध्यात्वा दन्तैः प्रताडयेत् ॥ ६१
स्मरन्नेवं जपेन्मन्त्रं मण्डलीक्ष्वेलशोफहृत् ।
ओं ह्रां ह्रीं पदमुच्चर्य कल्प पक्षिपदं वदेत् ॥ ६२
देवः अः पदमुच्चार्य अहमेति पदंवदेत् ।
वि[2]मुक्तपदमुच्चार्य पारस्वाहान्तमुच्चरेत् ॥ ६३
ताम्बूलखादनान्मन्त्रो हरेन्मण्डलिनो विषम् ।
दंशकाहिमधोवक्त्रं वमन्तं धूमवद्विषम् ॥ ६४
दष्टं विचिन्तयित्वैवं मर्दस्तद्विषशोभहृत् ।
तद्विषी श्वेतपोत्रिभ्यां भुक्तोक्तादीनि ? निर्विषम् ॥ ६५
विण्मूत्रस्तम्भने नाभेरधोलेप्यं विषस्य विट् ।
सतण्डुलोदकं भेकवसा वा विसृजेच्च तौ ॥ ६६
पिण्डालपत्रिकामूलं शीताद्भिः कुक्षिमालिखेत् ।
सर्वं स्रवति तत्रस्थं पुरीषं मूत्रमेव वा ॥ ६७

---

1. (ग) इदमर्धं न. 2. (ग) विमत्त.

चूर्णं तक्रोत्थरजनीलोध्रैस्सह विलेपयेत् ।
लोणस्यं पातं लेपश्च मण्डलीक्ष्वेलनाशनम् ॥ ६८
सस्तन्यं वकुलस्यास्थि नस्यान्मण्डलिशोफहृत् ।
विभीतकशतावेरीमुसलीवेगजां शिफाम् ॥ ६९
आम्रेण मेषीतक्रेण तद्दंशोपरि लेपयेत् ।
खार्या कपोतिमूलांसा ? चिञ्चास्थि सतुषं लिपेत् ७०
सघृत वज्रिकामूलं पिबेल्लिम्पेच्च तत्क्षते ।
वेगापाकलयोर्मूलं तत्पर्णरसपेषितम् ॥ ७१
सदेवदारुमहिषीशकृन्मूत्रेण पेषितम् ।
विषशोफहरावेतौ त्रिशूलीघोणसार्तिहृत् ॥ ७२
ससिन्धुं नालिकेराज्यं मण्डलिक्ष्वेलहृत्पिबेत् ।
त्वक्जलं नीलिकाभाव्यं मेषशृङ्गी च यामिनी ॥७३
खार्यैषां मूललेपेन नश्येन्मण्डलिनो विषम् ।
सक्षीरस्फोटकामूलक्वाथस्तम्भविषं हरेत् ॥ ७४
वचाशिग्रुत्वचौ पर्णौ नन्द्यावर्तवितानयोः ।
दोर्वल्लीसुरसायोषद्रोणोन्मत्तस्फुटा निशा ॥ ७५

नवां पानलकुष्ठं च चिञ्चापत्राणि यामिनी ।
[1]पिप्पलीं गृहसप्ताश्वमूलं सिंहावलिं स्थिराम् ॥ ७६

त्रीन्योगांस्तद्वीषी लिम्पेत् खारीतत्तण्डुलान्वितान् ।
विषावसाने लिम्पेत तक्रेणाक्षफलास्थि च ॥ ७७

चूर्णं तत्रभवं महातरुशिफा[2]लर्कं कदल्याः फलं
तुम्बीहिङ्गु मुनिश्शिशोश्शिवजलं नीलीसगुञ्जी शिफा।
चूर्णं नागलतादलं दधि नृपो लोणस्य पिण्डत्रयं
योगानामिदमाशु मण्डलिविषं लेपेन निर्मूलयेत्॥७८

कुष्ठोग्रालशुनं सरामठफलं व्योषं पिबेज्जातिकां
दोर्वल्लीसुरसाब्जकाग्निकरसे पित्ता[3]हिदष्टः पुमान्।
काश्मर्येण च जीवकर्षभयुगं न्यग्रोधशुङ्गं सिता
मञ्जिष्ठामधुकैश्च संयुतमसौ तत्क्ष्वेलशान्त्यै पिबेत् ।

कार्पीसनीलोञ्जशकृत्तिलानां
धूपाद्विषं न श्यति घोणसोत्थम् ।

1. (क) पिपीलि. 2. (क) वल्कम्. 3. (क) पित्ते.

तथाम्रगत्वक्किलपोत्रिविष्ठा
मयूरपिञ्छैर्विहिताच्च धूपात्॥ ८०
बोषा शृङ्गी कनककटुकी कायका मूर्ध्वपुष्पी
कोशातक्यौ दधि च महती मण्डलीक्ष्वेलकण्डूं ॥
तेषां लेपश्शमयति पुनः बुद्बुदं तद्विषोत्थं
सद्यो हन्यादजजलशकृत्पोत्रिविष्ठाविलेपः ॥ ८१
दुरालभाकाञ्जिकतण्डुलानि
द्रोणं तुषं यामवतीद्वयं च ।
तत्पिण्डिकास्वेदनमाशुकण्डू-
शोभादिहन्मण्डलिदष्टकस्य ॥ ८२
दुग्धीकिंशुकबाहुवल्लिसुरसाकोशातिकाम्भस्समैः
पिष्ट्वा यामवतीरसैर्मृदुदलं शुण्ठीशिरद्रोणयोः ।
तत्पिण्डया तुषवारितद्रसयुजा स्वेद्यं विषोद्यं क्षतं
तस्मिन् क्षीरमहीरुहां किसलयं पिष्टं पिबेत्तद्रसैः ॥
व्योषं त्रिकल्कं त्रिफला महिष्या-
स्तक्रोद्भवं सैन्धवमाक्षिकं च ।

एतद्विलेपाद्विषवेगनाशं
यान्ति क्षतं मण्डलिनीं क्षतानि ॥ ८४

रसे स्वकल्कैः शृतमाविताने
तैलं क्षते मंडलिनां निषिञ्चेत् ।
स्नुक्षीरगव्योषघृतं विपक्कं
तत्क्ष्वेलहत्स्वामयचन्दनेषु ॥ ८५

त्रिवृन्निशायष्टिफलं त्रयी[1] स्नुक्
क्षीरान्विते गव्यचतुष्कयुक्ते ।
ब्राह्मीरसे साधितमाज्यमुच्चै
र्विनाशयेन्मंडलिनां विषार्तिम् ॥ ८६

हत्वाहिं द्विमुखं पिधाय च मृदा कुत्रापि संरक्षितं
कुर्यान्मृद्भवति स्वयं स भुजगः कालेन या? यावता ।
तामादाय मृदं तदस्थिसहितां चूर्णीकृतां विन्यसेत्
पात्रे मंडलिदष्टमद्भिरनया लिम्पेत् पुनः पिष्टया ॥

इति काश्यपीये गरुडपञ्चाक्षरीकल्पे मण्डलिविषचिकित्सा नामनवमोऽध्यायः ।

---

1. (क) त्रयीषा. (ग) तुयेः स्नुक्.

## दशमोऽध्यायः

---

राजिलिना[1] तु दष्टस्य शृणु रूपाणि गौतम ।
मुखं सितं[2] भवेत्तस्य श्लेष्मा चैव प्रबाधते ॥ १
ऊर्ध्वं च समुदीक्षन्ते ? सान्द्रासृक्प्रस्रवेत्ततः[3] ।
अश्वपृथुकान्यपामार्गैः[4] पक्वं च बृहतीफलम् ॥ २
कोष्ठं कुक्कुटबीजं च कृत्वा तेनैव पेषयेत् ।
अञ्जनं चैव नस्यं च मृतसंजीवनं परम् ॥ ३
सैन्धवं पिप्पली चैला[5] क्षौद्रं गोमयसर्पिषा[6] ।
पिबेद्राजलिदष्टानां विषं सद्यो विनश्यति ॥ ४
राजलीविषनाशाय कृष्णा पेया ससैन्धवा ।
साज्यक्षौद्रा शकृत्तोया पुरीह्[7]न्द्रुगशोफहा ॥ ५
सकृष्णाखण्डदुग्धज्यं पातव्यं तेन माक्षिकम् ।

---

1. (ग) राजिलानां. 2. (क) शीतं. 3. (क) सदाहीह्री पिच्छिलस्स्रितः. 4. (क) बिल्वपृथुकान्यपामार्गैः पञ्चाङ्गं. 5. (क चैव. 6. वारिणा. 7. (क) प्ररित.

क्षितिर्गव्याशिफागस्त्यपुष्पवन्दाकदुग्धयुक् ॥ ६
तेन पेयं श्वेतपुङ्खीमूले वा सुरसान्वितम् ।
द्रोणपुष्पाम्बुमत्तैलं तिन्त्रिणीफलमर्दितम् ॥ ७
नस्येद्वा पाययेत् क्षीरं नवोदेक्षुरसैरसुम् ।
सकुष्ठरेणुकव्योषवक्रान्तिविषमाक्षिकाः ॥ ८
कटुका गृहधूमाढ्याहन्ति राजीमतां विषम् ।
सविश्वं[1] भव्यवन्दाकं भस्मीकुर्यात्प्रभञ्जनात् ॥ ९
तत्कृतां गुलिकां जिघ्रेत् सक्षौद्रां राजिलान्तकाम् ।
जिघ्रेद्वा नासया दर्वीं रोचनां सिन्धुजां गुलम् ॥ १०
पिबेद्वा गुलिके तत्र द्वे व्योषं वकुलास्थिना ।
दक्षिणावर्तमूलेन पाननस्ये पयोयुजा ॥ ११
वृश्चिकालीमुनिशिरोमूत्रैर्वा राजिलापहा ।
धूपो देवी सहा पिञ्छा खण्डनैस्तद्विषापहा ॥ १२
अञ्जयेत्सोषणं माषं लिम्पेच्च[2] गृहराजिले ।
कालोदरादिविषहा शारिबा तुहिनान्विता ॥ १३

1. (क) सपिशापीगु? वन्दाकं (ग) सविश्वं हव्यवार्ताकं.
2. (ग) लिंपेद्वक्रराजिले.

झौं ह्रीं पदमंथोच्चार्य क्ष्रीं हुं पदमथोच्चरेत् ।
अस्त्रान्तमभिमन्त्रोयं राजिलादिविष हरत ॥ १४

विषगर्भादिमन्त्रेण घोणसानां पुरोदितैः ।
सामान्यैश्चौषधैर्विद्वा ? द्व्यन्तरोऽहि विषं हरेत् ॥ १५

व्योषपिञ्छबिलालास्थिनकुलाङ्गरुहैस्समैः ।
चूर्णितैर्माषदुग्धाक्तैर्धूपस्सर्वविषापहः ॥ १६

शिखिपित्तं वचा हिङ्गुलशुनीनकुलास्थिभिः ।
मरीचितुल्यैर्धूपस्स्याद्विषहा स्नुहिवल्लिजः ॥ १७

शुण्ठीलोध्रमयूरास्थिबिल्वराजतरुत्वचा ।
द्विमुखाश्यामिकाहिभ्यां धूपौ सर्वविषापहौ ॥ १८

[1]पाठानिर्गुण्डिकाङ्कोलपर्णैश्च लशुनं समम् ।
[2]शिरीषबिल्वौ गुंजांगकर्णबीजं समा वचा ॥ १९

कतकीमूलवेगास्थि न[3]वा तुल्या च लाङ्गली ।
चूर्णितैस्तैः कृता धूपास्त्रयस्सर्वविषापहाः ॥ २०

---

1. (क) पाठाग्नि शुण्ठिका. 2. (ग) शिरीषगुञ्जाबिल्वाङ्ककर्णौ.
3. (क) नसा.

कुष्ठोग्रासिन्धुकतकत्वक्समुद्रफलं नतम् ।
शूलीगुंजाफलैराजिशिखिपित्तं च तैस्समैः ॥ २१
मातृघातिसमार्धं च लशुनं हिङ्गुपादकम् ।
निर्गुण्डिकाग्निनिम्बास्थिपक्षौ श्येनचकोरयोः ॥ २२
कोशातकीफलं श्वेता खण्डनं च समा इमे ।
कान्तापुष्पचतुर्भागं षड्भागं वकुलत्वचम् ॥ २३
लाक्षाष्टभागं तद्वाभ्यां योगाभ्यां धूपयेत्पृथक् ।
अपराह्णे प्रदोषे वा संध्ययोरथवा द्वयोः ॥ २४
धूपेन धूपयेदेषां दंष्टमिष्टेन नान्यथा ।
हरिद्रावेगमूलाक्षैस्त्रिचतुःपञ्चमुष्टिभिः ॥ २५
मुसलप्रहतैर्युक्तं चतुर्भागं जलं पचेत् ।
तैलेन दष्टं वेगास्थि वासितेन विमर्द्य च ॥ २६
कोष्णेन स्नापयेत्तेन तोयेन विषशान्तये ।
वचोग्रवल्लीलशुनसिन्धुचूर्णान्वितैर्जलैः ॥ २७
पाचितै[1]स्स्नापयेद्दष्टमभ्यक्तं पयसा तथा ।

1. (क) पाययेद्दष्टम्.

शिरीषास्थिमहागोपीदेवीनिर्गुण्डिकान्वितैः ॥ २८

अष्टांशपक्वैरम्भोभिस्स्नापयेत्तैललेपितम् ।

मुनिपत्रैः कृतस्वेदं दष्टं काञ्चिकपाचितैः ॥ २९

एरण्डाङ्कोलनक्ताह्वतिन्त्रिणीमातुलत्रयम् ।

१ मुसली लाङ्गुली निम्बं शिरीषवकुलौ नवा ॥ ३०

पर्णान्येतानि धान्याम्लपक्वानि स्वेदसाधनम् ।

धान्यस्वेदमपीच्छन्ति तत्र श्रेष्ठाः प्रियङ्गवः ॥ ३१

तोयपाके च शस्तानि स्वेदद्रव्याणि सर्वतः ।

स्नाने स्वेदे च पिण्डारपत्रिको[1]त्तमकण्टके ॥ ३२

१५ स्वेदानि स्नापयेदेभिः दिवा धात्रीं शिरो नयेत् ।

प्रियङ्गुकोद्रवौ शालिषाष्टिकौ च तदोदनम् ॥ ३३

मुद्गरेणुकयूषश्च विषार्तस्य विधीयते ।

अधिकं नागरं हिङ्गु ल[2]शुनं लवणोषणा ॥ ३४

योजयेदुपदंशादौ पानीयं च गदान्वितम् ।

१५ शूली वैकुण्ठजीवन्ती कुष्ठा पाठाब्ज[3]लक्ष्मणाः ॥ ३५

1. (क) कोक्तम 2. (क) हिङ्गुलवणम्. 3. (क) लक्षणम्.

मण्डूकी सूतवार्ताकी पटोलं चोपदंशकम् ।
तैलवङ्गकुलत्थानि शिग्रुनिम्बौ च नाशयेत् ॥ ३६

सर्पिर्गव्यं तक्रमाज्यं दधि माहिषमुत्तमम् ।
माहिषं तक्रमाज्यं च दध्याज्यं धाप्यमुच्यते ॥ ३७

विषस्तम्भकृदन्यस्यात् ? भुक्त्वा भक्ष्यं कटुत्रयम् ।
श्वाविट्कूर्ममृगा या? प्पा श्रेष्ठौ नकुलकेकिनौ ॥ ३८

अन्यत्स्यात् स्तंभकृन्मह्यं ? स्तोभकृत्कण्टकं विना
पिबेन्न मद्यं न तिलानि भक्षयेत्
ग्राम्यं न कुर्यान्न दिवा स्वपेच्च ।
व्यायामशीलो न भवेन्न कुप्येत्
नवातपं यातु सदा विषार्तः ॥ ३९॥

सदैव भुक्तौ क्रिययैवमुक्तया
प्रवर्तते यो विषपीडितः पुमान् ।
विषाणि सद्यः स्वयमेव दुर्जया
न्यपि प्रणाशं क्रमशो व्रजन्ति हि ॥ ४०॥

पाठाशेषशिरीषपद्मकिणिही ? कोशातकी रोहिणी
स्पृक्कासूर्यलतामधूकमधुकाद्राक्षाविळङ्गामृताः ।
शुण्ठीदाडिममातुलाग्निकबरीवेगावचारेणुकं
मञ्जिष्ठाफलिनीविषाश्वतगरश्रीवेष्टकुष्ठाञ्जनम् ॥ ४१॥

[1]एला सर्जरसं परात्रयफले तालीसभूर्जौ नृणां
पत्रं खट्फलकेसरारुणलताकौसुंभगोरोचनाः ।
मांसी चन्दनकुङ्कुमौ त्रिकटकं तालं बृहत्यौ शिला
पुत्रञ्जीवघनौ पुनर्नवयुगे द्वे शारिबे चोषणे ॥ ४२॥

निर्गुण्डी शङ्खपुष्पीरजनि
कटुकिका ब्राह्मिमण्डूकपर्णी
तुण्डीद्रोणान्वितानस्वरेसयुजि
सिताक्षौद्रके सस्नुदुग्धे ।
गव्यं पाठादिकल्के घृतमधिक-
भिषक्साधितं घोण सादि

1. (क) नालासर्जरसाश्वलत्रयफल.

क्ष्वेलं हन्यादशेषं वपुषि दिवि यथा
ध्वान्तमुष्णांशुतेजः ॥ ४३॥

शाकाटार्कलताचतुःक्षितिरुहां व्याघातकारर्वाद्रिषा
क्काथः कल्कममी च कुण्डलिगतोग्रावाकुचीसंयुतः ।
शिग्रुत्वक् द्विनिशार्कतुल्यसुरसाशाणक्य ? हेमोच्चटा
देवल्लीरसमेभिरप्यतिशृतं तैलं समस्तं विषम् ॥ ४४॥

शाङ्गेष्टाग्निपटोलपाटलनिशाभूनिम्बपिण्डीतका
दूर्वानिम्बकरञ्जयुग्मसुषुवीसैरीयसप्तच्छदाः ।
पाठापङ्कजराजवृक्षकुटजा घोणा मृता[1] कर्णिकी
तत्काथेन रमाकफादि विविधक्ष्वेलार्दितं शोधयेत् ॥

इति काश्यपीये गरुडपञ्चाक्षरीकल्पे मण्डलिविषचि-
कित्सा नामदशमोऽध्ययः ।

1. (कं) द्रुता कंटकी.

# एकादशोध्यायः।

चिकित्सा षोडशाखूनामुच्यतेथ सलक्षणा ।
लक्षणं कुलचन्द्रस्य रोमाञ्चोऽसह्यवेदना ॥ १
हृक्शोफाज्वरशोणाङ्गग्लान्यशक्त्यास्यतिक्तता ।
द्विनिशापाटली मूलमारनालेन लेपयेत् ॥ २
सपाटलदलैः कुर्याद्धूमं मार्जाररोमभिः ।
लक्ष्मीकार्कोटकीमूलचूर्णमाज्येन भक्षयेत् ॥ ३
कदलीफलसंयुक्ता भुक्तिस्तस्य घृतप्लुता ।
विषघातीविषे चिह्नं शिरोरुक्ज्वरगौरवौ ॥ ४
हृत्पीडा निक्तता खार्या शिरीषस्य शिफां लिपेत् ।
साङ्कोलपर्णैस्तत्पत्रैर्धूपः पुष्पं शिरीषजम् ॥ ५
पिष्ट्वा घृतेन पातव्यं भोजयेत्तं घृताप्लुतम् ।
भयानकस्य वैवर्ण्यं शिरोरुक्क्षुत्तृषा कफः ॥ ६
खार्याश्चारिबले लिम्पेद्धूपे ? भयफणित्वचा ।

[1]निशोषणफलं भक्ष्यं सगुलं पयसा शृतम् ॥ ७

कबन्धस्य क्षुदर्शाचश्वासः शोषोऽग्निमन्दता ।
छर्दिः क्लान्तिश्च निर्गुण्डी पल्लवं मस्तुना लिपेत् ॥ ८

त्रिफला[2]घनसाराध्या कृष्णा भक्ष्या गुलान्विता ।
गुलनासनपर्णैश्च धूपो भुक्तिः पयोधिका ॥ ९

कूरस्य श्वे[3]तकुष्टान्तर्दाहो ज्वरसुदुःखिते ।
नावामूलाभया तक्रं पिबेत्तेनैव लेपयेत् ॥ १०

साभयेन गुलेन स्याद्रूपस्तक्रेण भोजनम् ।
उग्रस्य मूर्ध्नि शब्दस्स्यात् क्षीणतारोचकौ ज्वरः ॥ ११

निर्वेदशूलौ च लिहेद्गुलैकाशुक्तिकारजः ।
फलं पुङ्खद्वयीमूलं पूतिकत्वक्प्रसाधिताम् ॥ १२

यवागूं पाययेल्लिम्पेत् खार्या पुङ्खखुकर्णिके ।
गुलनाकुलरोमभ्यां धूपो भुक्तिर्दधिप्लुता ॥ १३

भृ[4]लकस्यारुचिर्निद्रा शिरोरुग्गौरवोष्णते ।
आतपेच्छा बहुमूत्रं यवागूः पाटली रुहा ॥ १४

1. (ग) निशापलवणं. 2. (क) सरसाराढया. 3. (क) श्लेष्म. 4. (क) भूतक.

पेयाज्याङ्कोलनिर्यासं लिहेत्खार्या च तत्त्वचम् ।
लिम्पेत्पिच्छोरगांकोलत्वग्धूपः स्सूपयुग्भुजेत् ॥ १५
तीक्ष्णस्यालस्यलोमाञ्चौ दंशे कुरुकुरायितम् ।
बहुव्रणी[1]पथं ? मूर्ध्नि वेदना पुलकानि च । १६
गोमूत्रेष्टगुणे शब्दिकल्के पक्वं घृतं पिबेत् ।
शब्दिर्वकुलपर्णा[2]हित्वग्धूपो द्विनिशायुतः ॥ १७
निर्गुण्डीपल्लवं लिम्पेद्भुक्तिराज्यगुलान्विता ।
मेघनादस्य हृच्छोषज्वरनिर्वेदबुद्बुदाः ॥ १८
विभ्रामो दन्तविश्लेषः क[3]रञ्जीमूलमाज्ययुक् ।
पिबेत्समूत्रं तत्पर्णं लिम्पेद्धूपः फणित्वचा ॥ १९
नाकुलीरोममार्जारविड्वर्त्या ? दधिभोजनम् ।
कुमुदस्याङ्गकार्श्यं स्यात् श्यावदाहभ्रमज्वराः ॥ २०
अश्वद्विपुङ्खपूतीकशिरीषाङ्कोलजाश्शिफाः ।
कपित्थार्जुनपाटल्याः पर्णं खायाथवा लिपेत् ॥ २१
पूर्वोक्तमनयोस्साम्यं पिबेदन्येन धूपयेत् ।

---

1. (क) पटो. 2. (क) पर्णानि. 3. (क) कारञ्जी.

धूपेन तस्य मुक्तिस्स्यात्[1] सिंहास्यस्यारुचिर्ज्वरः ॥ २२
म्लान्यन्तर्दाहशैथिल्यपुलकानि [2]तिरोगतिः । ?
[3]खारी शिरीषसुमनोमूलगोक्षीरसाधिता ॥ २३
पेया यवागूः पालाशमूलदुग्धं पिबेल्लिपेत् ।
तत्पर्णैर्धूपयेद्भुक्तिः खार्या स्यादेकचारिणः ॥ २४
कण्डूश्शिरोरुग्भ्रान्तिस्स्यादातपेच्छा शनैर्ज्वरः ।
पुलकान्यन्तरौष्ण्यं च क्षीरेङ्कोलशिफां पिबेत् ॥ २५
निशाद्वयं कपिरसैर्लिम्पेत्पिञ्छासनान्वितैः ।
कपित्थपर्णैर्धूपस्स्याद्भुक्तिराज्येन सर्पिषा ॥ २६
सुनासस्य ज्वरालापौ रोमाञ्चो ग्रन्थिमूर्धरुक् ।
लिम्पेदङ्कोलमूलं तत्पर्णैं धूपैस्सितो ? युगम् ॥ २७
साङ्कोलकाश्मरीमूलं पिबेत्तैलेन भोजयेत् ।
सुदन्तस्यास्यमाधुर्यं पुलकाः पद्मनाभवत् ॥ २८
वेदनापारवश्याक्षिमान्द्यं देहरुजा क्षतम् ।
औष्ण्यं तृष्णा शिरोरुक्च तस्य सूपेन भोजनम् ॥

1. (ग) भुक्ति. 2. (क) शिरोखरी. 3. (क) शिरीषसुमनोमूल.

साज्या भक्ष्यासनस्यत्वग्लिम्पेत्तां वज्रिकाम्भसा ।
तत्पर्णमिश्रैर्धूप स्याच्छिरीषनकुलास्थिभिः ॥ ३०
चेष्टितं सुलभस्यान्तर्वेदना विषमज्वरः ।
दन्तविश्लेष[1]दाहाश्च पयोभुक्तिर्गुलान्विता ॥ ३१
सैरीयकाश्चतुलसी दूतलांससितोरिपुम् ।?
कपित्थाद्भिर्लिपेत्तेषां मूलं [2]मूत्रेण पेषयेत् ॥ ३२
तेषामेव दलैर्धूपः सुगर्भस्य विवर्णता ।
ज्वरो दौर्गन्ध्यमालस्यं कण्डूतिश्च शिरोगदः ॥ ३३
व्याघ्रान्तमूलं रजनी कपित्थदलमूलयुक् ।
मूत्रेण पेयं लेप्यं च धूपो [4]व्याघ्रान्तपल्लवैः ॥ ३४
सर्पिषा भुक्तिराखूनां चिकित्सैवं पृथक्पृथक् ।
कुस्तुम्बुरुनिशा[5]युग्मं शिरीषकुसुमैस्समम् ॥ ३५
कान्तापुष्पं पिबेन्मूत्रं समस्ताखुविषापहम्
सौम्याया वनमालायाः प्रतीच्यास्सप्तपर्णकम् ॥

1. (क) दाहामसृश्याये? 2. (क) मन्त्रेण. 3. 4. (क) व्याघात. 5. (क) निशादुग्गं.

सहस्राङ्घ्रिकपित्थत्वक्क्षीरेणाखुविषी पिबेत् ।
[1]मतल्लकार्पासरसं पिबेदाखुविषा[2]तुरः ॥ ३७

वन्ध्यातापिञ्छयोर्मूलं पृथक्खार्या पिबेदसौ ।
निष्पावखङ्गिनशाचूर्णं फलिनीकुसुमं तथा ॥ ३८

दार्वी कारस्करोद्भूता लेपपानादिनाखुहृत् ।
तथा पानात् पयः कृष्णा कदलीफलखण्डयुक् ॥

कदलीफल[3]मध्यस्थसप्तमत्कुणमाशयेत् ।
वनमालावचासप्तपर्णकल्कयुतं तु वा ॥ ४०

कुण्डलाग्निकयोर्मूलक्काथमाखुविषी पिबेत् ।
धूपो दुत्तूरमार्जारविष्ठाडुण्डुभचर्मजः ॥ ४१

तैलं [4]पञ्चाम्रकल्काढ्ये क्षीरे दशगुणे शृतम् ।
हरतो द्वाविमावाखुविषं सविषमज्वरम् ॥ ४२

त्रिकण्डूवनमार्जारमांसयूषं पृथक् पिबेत् ।
[5]साजी क्षीरकणा शुण्ठी तन्मांसं चात्तु तद्विषी ॥ ४३

1. (क) सगैरिकावासरसम् 2. (क) विषापहं. 3. (क) फलमन्तस्थ. 4. (ग) पञ्चाङ्ग. 5. (क) साजाक्षुरकणा.

गुलेन त्रिफला भक्ष्या मधुना वा घृतेन वा ।
अश्नात्वाखुविषी तुण्डीमूलक्वाथ[1]ज़मोदनम् ॥ ४४

कोशातकीफलरसे काञ्चिकेन शृते तथा ।
त्रिपलासमवार्ताकिमूलचूर्णन्तु दुग्धजाम ॥ ४५

गुलिकां चूर्णितां साज्ये [2]नास्याग्रासेन भोजयेत् ।
मुस्तामधुघृतोपेता लीढाखुविषनाशिनी ॥ ४६

सिक्तं लवणतोयेन निस्तुषं चूर्णितं तिलम् ।
सनागरगुलं भक्ष्यं तद्विषारोचकापहम् ॥ ४७

डुण्डुभस्य कृतं पेयं भक्ष्यं पानस्य फल्गुषु ? ।
त्रिंशत्कुसुम्भतोयं च कपित्थपलविंशतिं ॥ ४८

संपाच्य [3]कुसुम्भसंश्लिष्टं तदर्ध[4] तिलसंयुतम् ।
कारस्कजं तण्डुलजाविद्धमाखुविषी लिहेत् ॥ ४९

उत्तमा कर्णिकातुल्या जीवन्ती मौषिके विषे ।
लोणं हेमरसे गुञ्जा पत्र[5]पुष्पार्पिते न्यसेत् ॥ ५०

निषिञ्चेदङ्गुलीभिस्तत्क्षतमूर्ध्नि सि[6]तुाश्मजे ।

1. (क) गुलोदनम्. 2. (क) न्याट्यग्रा. 3. (क) कुटसंशिष्टं. 4. (क) वृत. 5. पोत्वीविष्ठापिते. 6. (क) तात्मजे.

रम्ले करतलेनाथ नखात् सिक्त्वा नसि न्यसेत्॥ ५१

शतमूलाशतावर्यौ नालिकेररसैर्युते ।
विभज्य पिष्टाखुविषी श्वयथूपरिलेपयेत् ॥ ५२

चेर्वा[1] मूलं लिपेत् खार्या मूषिकक्ष्वेलमोक्षणे ।
तटाकत्वक्सिरामूलसिद्धं तैलं तदौषधम् ॥ ५३

महिषीमथिते पीत्वा स्थिरा[2]खुपुषतण्डुलम् ? ।
खार्या पुन्नागबीजं वा तिष्ठेत्तैलाक्त आतपे ॥ ५४

पुराणविषजानाखुशिशून् कुक्षि[3]गतान्वमेत् ।
दुग्धिमातुलकोशातिव्योषं सरजनीद्वयम् ॥ ५५

पीतं तुषाम्भसा हन्याद्वमनान्मौषिकं विषम् ।
प्रातः कोशातकीबीजं तक्रेण महिषीभुवा ॥ ५६

दुग्धितुण्ड्योश्शिफां खार्या पीत्वा चाखुविषं वमेत् ।
कोद्रवं तण्डुलाचूर्णं [4]रसाकं क्षीरैर्विनिर्मितम्॥ ५७

जग्ध्वा धूपमधूपं वा वि[5]षमाखवमुद्गिरेत् ।
शिरीषपर्णक्वथोत्थां यवागूं पाययेत् पुनः ॥ ५८

---

1. (ग) चार्यामूलं. 2. (ग) स्थिरखंपुष. 3. (ग) कुक्षिगणान्नयसेत्. 4. (ग) मर्कक्षीरैः. 5. (ग) [illegible]

मलस्तम्भशिरोरोगच्छर्दिरुष्णा ? रुचिज्वरैः ।
शोफकुक्षियुताभ्यां च [1]पीडितं तु विरेचयेत् । ५९
वज्रिकाग्निशिखातुण्डीरसेषु बहुभावितान् ।
शुष्कपूगान् सताम्बूलान् विषघ्नानस्तु रेचकान् ॥ ६०
त्रिपूगसप्तच्छेदाढयं सचूर्णं पर्णसप्तकम् ।
मूढरो ? लिखितं [2]जप्तं विषघ्नं रेचकं चरेत् ॥ ६१
रेचनं सागरैरण्डबीजताम्बूलखादनम् ।
क्षीराष्टांशस्तु दुग्धोत्थ ? तक्रोत्थं रेचनं लिहेत् ॥ ६२
उशीरमार्जनं बीजं यवलाजं च चूर्णितम् ।
पुराणगुलयुग्भक्ष्यं रेचनादाखुदोषहृत् ॥ ६३
लक्ष्मीबीजं त्रिवृद्युक्तं मूत्रे पीतं विरेचनम् ।
शिरीषचर्म कार्पासं कपित्थाङ्कोलयोर्दलम् ॥ ६४
अर्कपुष्पं च तत्क्काथैर्विरिक्तं स्थापयेद्विषे ।
जान्तं वह्निसबिन्द्वन्तं सुधास्राविसमर्पितम् ॥ ६५
औषधे वा जले क्षीरे पानादाखुविषं हरेत् ।
[3]ले लेश्वरपदं चोक्त्वा संहरान्ते च पुःपदम् ॥ ६६

1. (क) विद्धितं. 2. (ग) विपत्कं. 3. (क) (ग) रेरेश्वर.

अर्कपुष्पमथो ग्रन्थ्यं [1]दन्ति संख्याभिमन्त्रितम् ।
[2]मारे निमीलयेदाखुविषे[3]णाहारिणा नयेत् ॥ ६७

नमस्सर्वपदं चोक्त्वा मूषिकेभ्यः पदं वदेत् ।
विश्वातित्रपदं चोक्त्वा आज्ञापयति चोच्चरेत् ॥ ६८

शीघ्रं गच्छन्तु तस्यान्ते मूषिकापदमुच्चरेत् ।
स्वाहान्तं मन्त्रमुच्चार्य पूर्ववत्संहरेद्विषम् ॥ ६९

शृङ्खलाख्यमिमं मन्त्रमाखुक्ष्वेलविनाशनम् ।
ककारैकारसंयुक्तं विसर्गान्तं समुद्धरेत् ॥ ७०

जान्तं वह्निसमायुक्तमौविसर्गसमन्वितम् ।
टान्तं विसर्गसंयुक्तं चिन्तामणिमनुः स्मृतः ॥ ७१

त्रयस्त्रिंशज्जपेनैव क्षणेनाखुविषं हरेत् ।
एकचरणे पदं चोक्त्वा पुः पदं मन्त्रमुच्चरेत् ॥ ७२

शर्करादशकं मन्त्री दशदिक्षु क्षिपेत्ततः ।
क्षेत्रे विषाणब[6]न्धस्स्याच्छतं जप्तेन मन्त्रितम् ॥ ७३

अशरणे च [5]संमुद्धृत्य तदन्ते पुः पदं वदेत् ।

---

1. (क) दन्त. 2. (क) मौनेन. 3. (ग) णाहारिणं. 4. (ग) पद. 5. (ग) गलितं. 6. बन्धु.

अशरंणे पदं चोक्त्वा गिरिशने पुः पदं वदेत् ॥ ७६

एतौ जप्त्वा क्षिपेद्यत्र राजीस्तत्राखुनाशनम् ।
ओं नमस्सर्वसिद्धान्ते हु[1]रुयुग्मं गु[2]रुद्वयम् ॥ ७५

स्वाहान्तं मन्त्रमुच्चार्य प्रयोगादाखुनाशनम् ।
द्वारेषु गुग्गुलुं दग्ध्वा घृताक्तान् सर्षपान् हुनेत् ७६

ग्रामे पुरेथवा गेहे म्रियंते यान्ति चाखवः ।
स्वर्णदंष्ट्रपदं चोक्त्वा वज्रदंष्ट्रेति चोच्चरेत् ॥ ७७

मत्तवराह तस्यान्ते कुञ्जरेति पदं वदेत् ।
बुधसिंहपदं चोक्त्वा मन्त्रमाखुविनाशनम् ॥ ७८

स्थित्वा त्रिसन्ध्यं सप्ताहं सप्तपाठात्तदाखुहृत् ।
नमो भगवते वज्रयशःपदमुदाहृतम् ॥ ७९

मूषिकेतिपदं चोक्त्वा मृगशब्दं समुच्चरेत् ।
वराहपदमुच्चार्य [3]कर्णकेरमतं ? ततः ॥ ८०

भक्षय स्संतुषोरन्ते ? बन्ध तुण्ड पदं वदेत् ।
आज्ञापयति हुं फट् स्यान्मूषिकोच्चाटनं मनुम् ॥ ८१

---

1. सर्वत्र 'गिरिशने' इत्येवास्ति विशरणे इति साधु. 1. (क) (ख) चरु. (ग) चुरु. 2. गुरु. इतिसर्वत्र. 3. (क) कंटकेरमृतस्ततः.

[1]संसग्रस्तमुखेमुना परिवृतो मन्त्रेण पत्रांपितो
विन्यस्ते भ[2]वनान्तरे वृ[3]षवरः प्रोच्चाटयेन्मूषकान् ॥
ध्यात्वा सर्वमयं गृहाङ्गमखिलं सा[4]न्तोग्निकान्तं जपेत्
स्तब्धास्स्युर्गृहमूषिका भयवशाद्गच्छन्ति वाशेषतः ८२
[5]साश्लेषे शशिजे श[6]रासनमये मूषाबिले पृष्ठतः
शङ्कुं विध्यतु पारबाधिकमधोवक्त्रं च सप्ताङ्गुलम् ।
व्याघातीयमथापि वासवरुणे ? नश्यन्त्यथो मूषिका
सर्पी पुण्ड्रभपुच्छवर्तिविहिता ज्वाला च तान्नाशयेत् ॥
कोशातकीद्वयकरञ्जमधूकवज्री
बीजक्षपाद्वयमजापशुमूत्रयुक्तम् ।
निर्गुण्डिमूलसहितं गुळकीकृतं त-
दाखून् हरेद्गृहगतान् विषहृच्च खार्या ॥ ८४
मृद्वीकासितय[7]ष्टिमूलसहितं सर्पिस्तथापाटली
श्वेतार्कोद्भवमूलदारुरजनीदोषाविपक्वं घृतम् ।

1. (ग) सर्वांगस्तत. 2. (ग) भुवनान्तरे. 3. (क) घृषवं ः. 4. (क) सन्तान्निकान्तं. 5. (ग) साम्येशे. 6. (ग) जरास… मये मूलङ्कले. 7. (ग) मूत्र.

मूत्रे साधितमाज्यमन्वितगदे युक्तेऽथवा काश्मरी
मूलेन त्रितयेन वाखुविषहृद्ध्येतानि सर्पींषि च[1] ॥ ८५

कनकादन्यास्वरसविहितं काकमाच्यास्तथावा
द्वाभ्यामाज्यं विषमपहरेन्मूषकाणां स्वकल्कः ।
कापित्थाद्भिः प्रश्रृतमथवा शङ्खपुष्प्यास्तथाभ्यां
सर्पिस्तद्वत् घृतमपि शृतं पूर्ववत्तैश्चतुर्भिः ॥ ८६

ब्राह्मीरसस्नुहिपयोगव्यचतुष्केषु साधितं सर्पिः ।
पीतं सशङ्खपुष्पं कल्कं मूषिकविषं हन्यात् ॥ ८७

साज्यैः कपित्थरम्भास्नु[2] (हि ?) दाक्षीणां रसैस्तु कुडुबमितैः
प्रस्थार्धपयोयुक्तैराखुविषघ्नं घृतं पक्वम् ॥ ८८

[3]शिरीषस्य त्वचं पिष्ट्वा क्षीरेण सह पाययेत् ।
अष्टाविधं घोर मूषकाणां विषं हरेत् ॥ ८९

इति काश्यपीये मूषिकचिकित्साविधिः

एकादशोऽध्ययः

---

1. (ग) घृतं. 2. (क) सस्तनु. 3. (क) (ख) इदं पद्यं नास्ति.

# द्वादशोऽध्यायः

चिकित्सा विंशतिर्लूताश्चतस्रोन्याश्च दुर्जयाः ।
हन्त्येका दंशनात्तासां छाययैका हरेन्नरान् ॥
आत्मानं दर्शयित्वैका गण्डेनैकेन नि[1]श्चितः? ।
[2]स्पर्शाशनोदकस्रावदंशस्याल्लूतिकाविषम् ॥
ह्रां ह्रीं ह्रूं पदमुच्चार्य क्षिप[3] ओं स्वाहया युतः ।
ज्वल हुं फट् सहस्रान्ते रश्मिरादिपदं [4]वदेत् ॥
[5]त्योग्नि ? पदमुच्चार्य भा[6]नुमन्त्रमुदीरतम् ।
देवी गरुडदुर्गे च भानुर्मन्त्रचतुष्टयम् ॥
लूतामन्त्रा इमे भानुर्गरुडो[7] दौर्गसाकयोः ।
पद्मकं पाटली कुष्ठं नदाम्बूशीरचन्दनम् ॥
निर्गुण्डी शारिबा शेलुर्लूताविषहरा गणाः ।
वर्चालशुनदोषाभिस्समं हिङ्गुस्तदर्धिका ॥

1. (क) न श्रितः च श्रितः. 2. (ग) स्पधाअनो. 3. (क) क्षिप दं. 4. (क) हरेत्. 5. सर्वत्रैवमेवाक्षराणि. 6. (ग) भानुमात्रा. 7. सर्वत्रैकरूपं.

[1]शुण्ठी मूत्रेण लेपादिकर्मणा लूतिकां हरेत् ।
वन्ध्यावेगशिफे लिम्पेत्तच्छोफे शीतवारिणा ॥ ७

चिञ्चावान्दाकिसंपक्वतैलं लूताव्रणं हरेत् ।
तदेव पयसा पिष्टं पातव्यं लूतिकाशने ? ॥ ८

ताम्बूलं साङ्गमाचर्व्य निष्ठीवेल्लूतिकाव्रणे ।
[2]देवी यापद्विपर्णे ? हिङ्गुतालवचागदाः ? ॥ ९

पिञ्छोषणेऽथवा [3]राजिलैर्धूपो लूतिकाहरः ।
गुञ्जानिर्गुण्डिकाङ्कोलपर्णं शुण्ठी निशाद्वयम् ॥ १०

करञ्जास्थि च तत्पक्वैर्लूतार्थं सेचयेज्जलैः ।
वृश्चिके संप्रवक्ष्यामि मन्त्रौषधविधिक्रमम् ॥ ११

[4]ओं स्रौं हुं चेति मन्त्रोयं पुरतो वृश्चिकान् हरेत् ।
[5]ओं हिलिहिलीत्युक्त्वा [6]वपुः पदमथोच्चरेत् ॥ १२

स्वाहाशब्दमथोच्चार्य हिलिशब्दमथोच्चरेत् ।
दलिः पुःपदमुच्चार्य ब्रह्मणे पुःपदं वदेत् ॥ १३

---

1. (क) शुंडी. 2. (क) (ख) देवीव्याघ्रादिपर्णेः⋯गदाः. 3. (क) राजितै. 4. (क) दं ह्रौं हुं चेति. 5. (क) दं हिलि. 6. सर्वत्र व पुः पदमित्यस्ति.

विष्णवे पुःपदं चोक्त्वा सर्पेभ्यः पदमुच्चरेत् ।
दैवतेभ्यः पदं चोक्त्वा पुःपदं स्वाहया युतम् ॥ १४
मन्त्रावेतौ प्रयोक्तव्यौ वृश्चिकक्ष्वेलनाशने ।
मञ्जिष्ठा चन्दनं दोषे पुष्पे शैरीषकौमुदे ॥ १५
शाङ्गेष्ठौ[1] च त्रयो योगा लेपादेर्वृश्चिकापहाः ।
मोहिन्या उपनाहस्तु दंशे वृश्चिकनाशनः ॥ १६
तद्दंशे[2] वा धवेत्कर्णे न्यस्यास्ये लवणोषणे ।
गर्दभास्वादिना खादे वदेन्मन्त्रौषधिक्रियाः ॥ १७
ओं परा[3]द्वयमुच्चार्य वर[4]युग्ममथोच्चरेत् ।
[5]किलिः पदद्वयं ब्रूयाच्चिरिः पदमथोच्चरेत् ॥ १८
छिन्दा[6]? पदमथोच्चार्य भिन्दः? पदमथोच्चरेत् ।
चिलिद्वयमथोच्चार्य खड्गेन छिन्द वीप्सया ॥ १९
छेदद्वयमथोच्चार्य शूलेनेति पदं वदेत् ।
दारयद्वयमुच्चार्य हुं फट् स्वाहान्तमुच्चरेत् ॥ २०
मन्त्रेण गर्दभश्वाभ्यां गोमहिष्यादिना[7] ततः ।

1. (ग) शाङ्गाष्टाच. 2. (ग) तद्दंशे पाययेत्कंठे. 3. (ग) ओंफकार. 4. (क) परयुग्म. 5. (ग) रितिपदद्वयं (क) तिरिः पद. 6. सर्वत्रैकरूपं 7. (क) तत्व.

व्याघ्रऋक्षादीनां चैव मार्जारस्य[1] कपेस्तथा ॥ २१
मन्त्रध्यानसमायोगाद्विषनाशी भविष्यति ।
त्रिफलोशीरमुस्ताब्जमांसीपद्मकचन्दनम् ॥ २२
अजाक्षीरेण पानादेर्गर्दभादिविषं हरेत् ।
लिम्पेदैन्द्रीनिशाशङ्खपीतं पर्णां[2] च तानसम् ॥ २३
सद्रोणस्वरसं तैलं किञ्चित्पूर्णं लिपेत् पिबेत् ।
विषगौलीजले दंशे वेदनानाशनाय वै ॥ २४
सितेहामूलपञ्चाङ्गं त्र्यस्ते नसि[3] ह्राकराः ।
साक्षी विळं कपित्थार्कबिल्वे व्योषं निशाद्वयम् ॥ २५
सनक्तमालं पूतीकं नाशयेत् गृहगौलिकां ।
सर्पिर्गो ? विना लेपो जम्बूकविषनाशनः ॥ २६
हरेच्छिरीषपञ्चाङ्गं व्योषश्शतपदीविषम् ।
सास्नुक्षीरशिरीषास्थि हरेद्दर्दुरजं विषम् ॥ २७
व्योषस्ससर्पिषी पिण्डी मूलं मत्स्यविषं हरेत् ।
नमो भगवतेत्युक्त्वा विष्णवेति पदं वदेत ॥ २८

1. (क) मार्जा श्श्वाकपिस्ततः. 2. (ग) वर्णै तदासनम्. 3. (क) नस्विह्राकराः. 4. (क) जलूका.

[1]वरद्वयमथोच्चार्य [2]वरयुग्मं च वर्म फट् ।
स्वाहान्तं [3]मन्त्रमुच्चार्य कृमिकीटादिकं हरेत् ॥ २९

क्षारव्योषवचाहिङ्गुविळङ्गं सैन्धवं ततः ।
अम्बष्ठातिविषाकुष्ठं सर्वकीटविषं हरेत् ॥ ३०

शतमूलं त्रिवृत् [4]सर्पिस्सर्वकीटापहं पिबेत् ।
जिघांसुं सिंहमात्मानं ध्यात्वा [5]दष्टं च कुञ्जरम् ३१

[6]तन्मध्येऽब्धिं च सिंहास्थि? भीत्या धावति [7]तद्विषी ।
तन्निरुध्य जपेन्मन्त्री वीजं लिप्यब्जकर्णिकम् ॥ ३२

क्ष्रौं बीजं च शतावृत्या सिंहं ध्यात्वा विषं हरेत् ।
अलकाधिपते यक्ष सारमेयगणाधिप ॥ ३३

उक्तदष्टपदान्ते च मतं मे निर्विषं कुरु ।
मा चिराय पदस्यान्ते स्वाहान्तं मन्त्रमुद्धृतम् ॥ ३४

मत्तालर्कशिवादीनामेतौ मन्त्रौ विषापहौ ।
अङ्कोलानदलं क्षीरे पेयं व्योषान्वितं च तत् ॥ ३५

---

1. (क) सरं (ग) सुर. 2. (ग) वरेत्यादिपादोलुप्तः. 3. (ग) वद. 4. (ग) सर्पिरित्यादिः पादःगलितः. 5. (क) कृष्टं. 6. तन्मध्येस्थि च. 7. (ग) तद्विषि.

तच्च व्याघ्रपदीयुक्तं साज्येन पयसा पिबेत् ।
यष्टि[1]व्योषात्मगुप्तास्थि [2]धान्यगुलं. प्रियङ्गवः ॥ ३६
द्वौ कर्णिकारभागौ तत् पिबेद्गुलपयोयुतम् ।
कोशातीवत्सबीजाक्षं मूलजातिरसं पयः ॥ ३७
व्योषं वा पललं साक्षात् क्षीरतैलपयोगुलम् ।
हेमास्थियष्टिव्याघ्रत्वक् व्योषदुग्धगुलं मधु ॥ ३८
यष्टिव्योषगुलं क्षीरं योगास्तेऽश्वविषापहाः ।
कर्णिकारासनौ गुप्ता [3]वीरत्रिकटुमाधवी ॥ ३९
यष्टिधान्यगुलक्षीरं दष्टो मर्त्यः शुना पिबेत् ।
खारीकरञ्जसर्वाङ्गक्वाथेन स्नात आतपे ॥ ४०
तिष्ठेन्मत्तोपि मत्तेन शुना दष्टो विषं त्यजेत् ।[4]
[5]आबूपीयं? लिपेन्मूलं श्वदंशे व्रणरोपणम् ॥ ४१
तत्पिष्टेन गुलाक्तेन तत्पिधायाग्निना दहेत् ।
लेपेन शर्करालर्कदंशे क्षुद्रव्रणं हरेत् ॥ ४२
स्थावरस्य विषघ्नं स्याद्विधिर्मन्त्रौषधैःक्रिया ।

---

1. (क) व्योमात्म. 2. धान्याकुष्टं. 3. (ख) वीरात्रिकटु (ग) द्विरात्र. 4. (क) मत्तशुना. 5. (क) आलूपीथुं.

नमो भगवतेत्युक्त्वा गरुडाय पदं वदेत् ॥ ४३
महेन्द्ररूपायपदं पश्चात पर्वतमुच्चरेत् ।
मोचयद्वयमुच्चार्य पातयद्वयमुच्चरेत् ॥ ४४
निर्विषद्वयमुच्चार्य तत्परं विषमुच्चरेत् ।
अमृतमाहर चोच्चार्य [1]संदशमितीदं पदम् ॥ ४५
भक्षयामीति चोच्चार्य [2]ठंठयुग्ममथ द्वयम् ।
ललयुग्मं [3]पदद्वन्द्वं पक्षियुग्मं हरद्वयम् ॥ ४६
स्वाहान्तं प्रणवाद्यं च जपेन्मन्त्रमनन्यधीः ।
मन्त्रेणानेन तार्क्ष्यात्मा संहरेत् स्थावरं विषम् ॥ ४७
तद्विस्मयाय भुञ्जीयादपरं भोजयेदपि ।
नमः पुरुषसहाय नमो नारायणाय च ॥ ४८
यथासौ नाभिजानाति रणे कृष्णः पराजयम् ।
एतेन सत्यवाक्येन अगदो मे प्रसिध्यतु ॥ ४९
नमो [4]वै सूर्यमात्रेण हुलु रक्षयुगं वदेत् ।
विषेभ्योच्चार्य गौरा चण्डालिनी पदं वदेत् ॥ ५०

1. सद्दंशेतीमं पदं. 2. (क) ठंयुग्मं मं मम. 3. (क) ववद्वन्द्वं.
4. (क) नमो वैधूर्यमन्ते च.

मातङ्गिनी पदं स्वाहा मन्त्रमन्यदिहोच्यते ।
हरि[1]मांथिनि तस्यान्ते स्वाहामन्त्रमिति स्मृतम् ॥
औषधादौ प्रयोक्तव्यो मन्त्रोयं स्थावरे विषे ।
भुक्तमात्रे स्थिते क्ष्वेले[2] वान्तं शीताम्बुसेवितम् ॥ ५२
पाययेत् सघृतं क्षौद्रं त्रिरिञ्चेति तदुत्तरम् ।
कोशातक्यग्निकः पाठा सूर्यवल्यमृताभया ॥ ५३
सेलुश्शिरीषकर्णी च काश्मरी यामिनीद्वयम् ।
पुनर्नवा बृहत्यौ द्वे शारिबे द्वे[3] कटुत्रयम् ॥ ५४
यवागुरेतत्काथोत्था शीतला साज्यमाक्षिका ।
उपयुक्ता हरेत्सद्यो निश्शेषं स्थावरं विषम् ॥ ५५
सिन्धूत्थदोषासि[4]तमाक्षिकाणां
पानं विषं स्थावरमाशु हन्यात् ।
श्लक्ष्णीकृतं ताम्रसुवर्णचूर्ण-
श्लक्ष्णं सिताक्षौद्रयुतं तथैव ॥ ५६

---

1. (क) हरिमायिनि. (ग) हरि माधिरि. 2. (ग) लान्तं.
3. (क) शारिबे च. 4. (क) घृतमाक्षिकाणां.

मञ्जिष्ठांशुमतीहरेणु तगर कुष्ठ वृहत्यौ स्थिरा
यष्टीचन्दनतैलनागकुसुमं व्योषं विलङ्गोत्पले ।
पत्रं सोच्चटमिन्द्रदारुफलिनी द्वे शारिबे च क्षप ?
तैलं तद्विहितं घृतं च विहितं हन्याद्विषं स्थावरम् ॥

कुष्ठैलामलयजगैरिकं सलोध्रं
ल्यं ?.मधुकसुवर्चिका च मांसी ।
एषोयं मसम ? धुनोति चक्रचूर्णं
तद्दूषी विषमपहन्ति साधुसिद्धम् ॥ ५९

कोशतकी हन्ति घनं त्रिवृत्क
पोलो[5]दिनेशः ? पललं हयारिम् ।
पथ्यास्थिकापासकमाक्षिवेलं
पतङ्गविश्वं च शृतं च वारि ॥ ६०

पद्मो, हेमविषं क्षिणोति कुसुमं चूतस्य शृङ्गी स्नुही
[7]छिन्नोत्सावरकं शिरीषकुसुमं जम्बू च [8]कारञ्जकम् ।

1. (गी) शैलनाग. 2. (क) क्षते. 3.4.7 एवमेवसर्वत्रा क्षराणि. 5. (क) पोलो. 6. (ग) मषि. 8. (क) कारस्करं.

चूर्णं पावक (सं) भवं तु कदलीपुष्पं गलीलार्द्रकं[1]
भल्लातद्विजभूरुहश्शरणभृद्दोषं हरेदुच्छंपा ? ॥ ६१
शतधौतं नवनीतं भल्लातकजं विषं हरेल्लेपात् ।
ईदृग्विषं समस्तं शमयति नीली तथा लोध्रम् ॥ ६२

[2]दाहच्छेदसिरावेधशोषणाभ्यञ्जनानि च ।
पानलेपननस्यादि चिकित्साष्टविधा भवेत ॥ ६३

द्रव्येप्यनुक्ते विहितं तु मूलं
द्रवेप्यनुक्ते जलमेव देयम् ।
भागेप्यनुक्ते समभागमेव
कालेप्यनुक्ते दिवसस्य पूर्वम् ॥ ६४

दन्तशुक्लनख ? रोमनखास्थि
स्वेदमांसरुधिरं च पुरीषम् ।
मूत्रपुच्छनयनास्यजलं च
घ्राणजङ्गमविषं त्वथेच्छया ॥ ६५

पत्रपुष्पफलमूलघृतं च
बीजकण्टकपयस्त्वथेच्छया ।

---

1. (ग) गलीलादिकं· 2. (ग) इदं गलितम्.

चर्मवै व ? दशधा विषजात
स्थावरं विविधवेगभिति स्यात् ॥ ६६

इति काश्यपीये गरुडपञ्चाक्षरीकल्पे
* द्वादशोऽध्यायः

---

## त्रयोदशोध्यायः

गौतमः—

मन्त्रं च विनियोगश्च विषं स्थावरजङ्गमम् ।
श्रुतं च विधिना पूर्वमभिषेकं वदस्व मे ॥ १

काश्यपः—

अभिषेकं प्रवक्ष्यामि सर्वेषां हितकाम्यया ।
अभिषेकविधिर्गुह्यो न प्रकाश्यः महामुने ॥ २

सर्वपापहरं पुण्यं सर्वोपद्रवनाशनम् ।
श्रीकरं पुष्टिदं नृणां सर्ववश्यकरं वरम् ॥ ३

---

* क्षकाराभ्यन्तरा नाम स्वरषोडशवेष्ठितम् ।
पुनःप्रणववेष्ट्यं तुबाह्ये षट्कोणमंडलम् ॥

(क) कोशे इदं पद्यम् अध्यायान्ते पृथक् अधः लिखितमस्ति. 1. अयमध्यायः (क) (ख) कोशयोर्नास्ति.

सर्वव्याधिहरं सर्वभूतप्रेतविनाशनम् ।
सर्वक्षुद्रहरं दिव्यं विषवीर्यविनाशनम् ॥ ४
पुत्रप्रदमपुत्राणां वन्ध्यायाश्च विशेषतः ।
तस्मात्सर्वप्रयत्नेन अभिषेकं समाचरेत् ॥ ५
आत्मनो जन्मनक्षत्रे शुभे वारे शुभे तिथौ ।
अयने विषुवे चैव चन्द्रसूर्योपरागके ॥ ६
भूमिभागे समे शुद्धे निम्नोन्नतविवर्जिते ।
देवालये नदीतीरे गोष्ठे च गिरिमूर्धनि ॥ ७
यजमानगृहे वायुवने कोद्यानकेपिवा ? ।
अभिषेकाय विधिवन्मण्डपं परिकल्पयेत् ॥ ८
चतुर्द्वारसमोपेतं चतुस्तोरणसंयुतम् ।
षोडशस्तम्भसंयुक्तं सर्वलक्षणसंयुतम् ॥ ९
अलङ्कारैर्वितानाद्यैर्ध्वजरूपैस्स्वलङ्कृतैः ।
कुङ्कुमागुरुकर्पूरधूपद्रव्यैः प्रधूपितः ॥ १०
विलि ? कृतमालाभिः पालिकाभिरलङ्कृतम् ।
अष्टमङ्गलसंयुक्तं पूर्णकुम्भसमन्वितम् ॥ ११

अष्टद्रोणैस्तदर्धैर्वा पादैर्वा व्रीहिसञ्चयम् ।
कृत्वा तस्मिन् समालिख्य यन्त्रराजमनुत्तमम् ॥१२
यजेदाधारशक्त्यादीन् यन्त्रार्चनमतः परम् ।
सौवर्णं राजतं ताम्रं पार्थिवं वा सुशोभनम् ॥ १३
सर्वलक्षणसम्पन्नं कुम्भमभ्यर्च्य देशिकः ।
कुशमुष्ट्या ततो बध्वा वास्त्रमन्त्रेण मन्त्रवित् ॥१४
प्रक्षाल्य वारिभिश्शुद्धैस्तन्तुना वेष्टय सन्ततम् ।
चन्दनागुरुकर्पूरं धूपयेल्लेपयेत् बुधः ॥ १५
स्थापयेत्कर्णिकामध्ये वैनतेयमनुं स्मरन् ।
क्षीराब्धिममृतं ध्यात्वा तीर्थतोयेन पूरयेत् ॥ १६
स्पृष्ट्वा जप्त्वाथ पुंसूक्तं श्रीसूक्तं तदनन्तरम् ।
चन्दनागुरुकर्पूरकुङ्कुमोशीरपाटलान् ॥ १७
एलालवङ्गतक्कोलजातित्वक्पत्रवारिजान् ।
मौक्तिकं विद्रुमं नीलं वज्रं वैडूर्यमेव वा ॥ १८
पद्मरागं तु गोमेधं पुष्पं मरकतं तथा ।
लक्ष्मीदूर्वा सहादेवी सदा भद्रा मधुव्रता ॥ १९

प्रियङ्गुमुद्गगोधूमंव्रीहींश्च यवमाषकान् ।
अक्षतांनि संमिश्रान् प्रक्षाल्यैतान् घटे क्षिपेत् ॥ २०
कदलीनारिकेलं च लिकुचादिफलं तथा ।
पद्मसौगन्धिकं जातीमल्लिकावकुलास्तथा ॥ २१
चम्पकोत्पलकं क्षौद्रं चन्दनं च विनिक्षिपेत् ।
अश्वत्थौदुम्बरप्लक्षं वटबीजाङ्कुरं क्षिपेत् ॥ २२
दूर्वां च नवरत्नानि पञ्चरत्नानि वा पुनः ।
निष्कं तदर्धं तत्पादं सौवर्णं वा विनिक्षिपेत् ॥ २३
नववस्त्रेण संवेष्ट्य दुकूलेनापि वेष्टयेत् ।
घोषयेच्च चतुर्दिक्षु वादयेत् क्रमशस्तथा ॥ २४
गीतवाद्यादिनिर्घोषैः शङ्खकाहलनिस्वनैः ।
कुम्भस्थजलमक्षय्यममृतं भावयेत् बुधः ॥ २५
तन्मध्यादुत्थिते पद्मे सौवर्णे चाष्टपत्रके ।
तस्मिन् देवं समावाह्य सौम्यं गरुडविग्रहम् ॥ २६
यथोक्तं भावयेद्देवमर्चयेच्च यथाक्रमम् ।
अष्टोत्तरायुतं वाथ वाष्टोत्तरसहस्रकम् ॥ २७

अष्टोत्तरशतं वापि कुम्भं स्पृष्ट्वा जपेत् बुधः ।
चत्वारोऽनुजपं कुर्युः वह्निकार्यं समाचरेत् ॥ २८

कुण्डं वा स्थाण्डलं वाथ कुण्डस्योत्तरतः कृतम् ।
मथिताग्निं समाधाय श्रोत्रियागारतोपिवा ॥ २९

प्रज्वाल्याग्निमुखं कृत्वा·········
···पुष्पाद्यैस्समाराध्य यथाक्रम् ॥ ३०

निवेदयेच्च मुद्गान्नैरपूपैः पायसैः फलैः ।
ततः पूजां समाप्येमान् मन्त्राने······ ॥ ३१

···परिषेकान्तं कृत्वा होमं समापयेत् ।
गोमयेनोपलिप्यैवं मंडलं सुसमाहितः ॥ ३२

तण्डुलैः स्थण्डिल···मन्त्रेण संयुतम् ।
पूर्व·····विधिवन्मन्त्रवित्तमः ॥ ३३

तन्मध्ये गुलिकां स्थाप्य पूजयेदर्चनं क्रमात् ।
जपेच्च गारुडं मन्त्रमष्टोत्ररसहस्रकम् ॥ ३४

मुहूर्ते समनुप्राप्ते ऋत्विग्भिर्ब्राह्मणैस्सह ।
अभिषिञ्चेत्ततो मन्त्री देवदेवमनुस्मरन् ॥ ३५

केशाम्बुना न निवपेन्न स्पृशेत् स्नानशाटिकाम् ।

नाधितिष्ठेत्स्नानजलमलङ्कुर्यात्ततो बुधः ॥ ३६
·····लनि च संस्पृशेद्वृषभं मण्डलास्त्रियः?१
ग्रहाणां नवकानां च यज्ञं कुर्यात्तु देशिकः ॥ ३७
आयुश्च श्रीश्च मेधा च पुत्रक्षेत्रगृहं तथा ।
गोदासदासीबन्धुश्च वर्धते चाभिषेचनात् ॥ ३८
दक्षिणा चात्र देयास्याद्धनधान्यदि सादरम् ।
ऋत्विग्भ्यो दक्षिणां दद्यात् ब्राह्मणांस्तर्पयेद्बुधः ॥
प्रतिमासं स्वजन्मर्क्षे कुर्यादेवमतन्द्रितः ।
अथवा वात्सरे ऋक्षे एवं कृत्वा विचक्षणः ॥ ४०
सौवर्णे राजते चैव भूर्जपत्रे सुशोभने ।
पूर्वोक्तयन्त्रमालिख्य तत्प्रतिष्ठां करोति सः । ४१
प्राणप्रतिष्ठां कृत्वाथ जपेदष्टसहस्रकम् ।
तत्समं होममाज्यैश्च हुत्वा संपातमाचरेत् ॥ ४२
अभिषेकात्परं मन्त्री यन्त्रधारणमाचरेत् ।
पूर्ववद्दक्षिणां दद्यातपू र्वव्रतफलमाप्नुयात् ॥ ४३
एवं प्रकारं यः कुर्यात् तस्य सिद्धिर्ध्रुवं भवेत् ।

इति काश्यपीये गरुडपञ्चाक्षरीकल्पे अभिषेकयन्त्र-
धारणविधिः त्रयोदशोऽध्ययः ।

हरिः ओम्

# शुभमस्तु

१. विद्वेषणम्.

अग्निमण्डलं वायुमण्डलं विलिख्य, तन्मध्ये बीजमण्डलं विलिख्य, अग्निवायुसहितं गरुडं ध्यायेत् । मन्त्रः. हा स्वा पक्षि ओम् अस्य विषादीन् विद्वेषय स्वाहा.

२. मोचनम्.

अग्निमण्डले वरुणमण्डलं विलिख्य, तन्मध्ये तत्तदक्षरं विलिखेत् । अग्निवरुणसहितं गरुडं ध्यायेत् । मन्त्रः. ओं प स्वा क्षि हा । अस्य विषादीन् मोचय स्वाहा.

३. मारणम्.

अग्निमण्डले प्रणवं तन्मध्ये रं । ध्यानम् । "तेजोमण्डलगम्" इति । मन्त्रः. ओं क्षि प स्वाहा मम शत्रून् मारय स्वाहा.

४, निगळमोचनमन्त्रः. स्वाहा पक्षि ओम्.

५. सर्वदुरितनाशनम्. [1]स्वाहा क्षि ओम्. अस्य वर्तमानदुरितं नाशय स्वाहा। ओम् नमो भगवते पवनाशनाय पन्नगभुजे

1. अत्र 'प' इति वर्णः क स्थाप्यः.

पक्षिराजाय साध्यपूर्वकं हुं फट् स्वाहा. (अस्य पुरश्चरणा सप्तविंशति सहस्रम्; प्रयोगे त्वष्टाविंशति संख्या.)

बीजादिमन्त्राः संक्षेपतो वक्ष्यन्ते.—

६. बीजमन्त्रस्य.—

दक्ष ऋषिः, विष्टरपङ्क्तिश्चछन्दः, सुपर्णो देवता ओं, बीजं, ओं शक्तिः, स्तम्भनार्थे विनियोगः. खां खीं खुं खैं खौं खः, एवं कराङ्गन्यासः। अथ ध्यानं, गरुडध्यानं ओं ओं ओं नमः। अस्य नाम गरुडैकाक्षरम्.

७. पिण्डमन्त्रस्य.—

ब्रह्मा ऋषिः, गायत्री च्छन्दः, सुपर्णो देवता, ह्रां बीजं, ह्रीं शक्तिः, विषसंहरणार्थे निनियोगः, ह्रामित्यादि कराङ्गन्यासः. गरुडध्यानम्. मन्त्रः. ओम् ह्रीमों नमः.

८. संज्ञामन्त्रस्य—पुलस्त्य ऋर्षिः, पङ्क्तिश्च्छान्दः, गरुडो देवता, वं बीजं, नमश्शक्तिः, तत्तत्कर्मणि विनियोगः, वैं हृदयाय नमः, नं शिरसे स्वाहा, तें शिखायै वौषट्, याय कवचाय हुं। नेत्रत्रयाय इति वर्ज्यं। नम अस्त्राय फट्. ध्यानम्. ओं वैनतेयाय नमः.

९. दशाक्षरमन्त्रस्य.—

दश ऋषिः, विराट् छन्दः, गरुडो देवता, प्रणवः बीजम्, स्वाहा शक्तिः, तत्तत्कर्मणि विनियोगः. ओं हृदयाय नमः, नमश्शिरसे

स्वाहा, पक्षि शिखायै वौ षट्, राजाय कवचाय हुं, [1]त्रं वज्यै । स्वाहा अस्त्राय फट् ध्यानम्..मन्त्रः. ओं नमः पक्षिराजाय स्वाहा.

१०. कूटगरुडमन्त्रस्य.—

वैश्रवण ऋषिः. विराट् छन्दः, गरुडो देवता, प्रणवः बीजं, स्वाहा शक्तिः, कर्मणि विनियोगः, क्ष ? इत्यादीनामङ्गन्यासः. ध्यानम्. मन्त्रः ओं क्ष्म्रीमों नमः.

११. पदमन्त्रस्य.—

दक्षिणामूर्ति ऋषिः, जगती च्छन्दः, महातार्क्ष्यो देवता, प्रणवः बीजं, नमश्शक्तिः, कर्मणि विनियोगः, अनेनैव मन्त्रेण न्यासः. ध्यान, मन्त्रः ओं क्ष्म्री मों नमो भगवते अष्ट (कुलनाग) भूषणाय, वैनतेयाय-नागशोणितदिग्धाङ्गाय, सुपर्णाय, सर्वलोकरक्षणोन्मुखाय, सर्वभूत भयङ्कराय, सर्वाण्डान्तरवासिने, दशोत्तरावरणातीताय, सर्वगताय, सर्वैश्वर्याय, पक्षिराजाय, भगवद्वाहनाय, गरुडाय, सर्वाण्डान्तरक्षोभ-नाशाय, ब्रह्मादी ? चतुरक्षराद्यनुस्वाराय, युगान्तबीजाय, मातुरर्थे शाप-शोकमोचनाय, अमृताहरणदक्षाय, हन हन दह दह मम शत्रून्नाश्शय· भगवदङ्घ्रिकिरणाङ्कितशरीराय, सर्वतेजोमयाय सुमुखाय, सुप्रति-ष्ठाय, सर्वनागभक्षणप्रियाय, भगवदङ्गरक्षणाय, ध्वजे प्रतिष्ठिताय. सर्वविघ्नविनाशाय, गरळनाशाय, वैनतेयाय स्वाहा.

1. "अंत्र—नेत्र त्रयाय ' इति " इति गलितं स्यात्.

१२. स्तुतिमन्त्रस्य.—

कश्यप ऋषिः, शक्करी च्छन्दः, गरुडो देवता, प्रणवो बीजं, स्वाहा-शक्तिः, तत्तत्कर्मणि विनियोगः। ओं नमो भगवते अष्टकुलनागभूषणाय; अरुणकनीयसे, नागशोणितलिप्ताङ्गाय, सप्तपाताळवासिने, सर्वजन, विक्षोभकराय, महामेरुसदृशवपुषे, पुरुषोत्तमवाहनाय, विनतानन्दकराय) त्रैलोक्यक्षोभणदेवदानवगन्धर्वोरगमथनाय, मातुरर्थे अमृतदाननाग मोहनाय, हन हन विघ्नं नाशय हुं फट् स्वाहा.

'ओं नमो भगवते गरुडाय सर्वविषनाशाय सर्वज्वरनाशाय स्वाहा। मुखं कमलवासुकी त्रिभुवन सर्वेश्वरी भुवि विषण? भुवि चक्र गरुड आवेशय अवेशय भूचण्डगरुडाय स्वर्णरवाय आतट्टताय? पराय पक्षिराजाय विनतासुताय अष्टोत्तररागाय? रक्षो(त्रे?) नागाय वृश्चिकाय हन हन, पच (पच) शीधु? मावेशय हर ?(हुं) फट् स्वाहा.

ओं नमो गरुडाय ओं नमोऽनन्ताय महानागहृदयाय सर्वनाग-वशङ्कराय स्वाहा. अनेनाभिमन्त्रितोदकस्नानादृष्टः स्वस्थो भवति, ओं ह्रीं क्लीं गौं हं क्षूं स्वहा.

१३. सर्पमुखबन्धनमन्त्रः. ओं ह्रां हुं स्वाहा.

१४. सर्पगतिस्तम्भनमन्त्रः. ओं ह्रां क्षां स्वाहा.

१५. सर्पदृष्टिबन्धनमन्त्रः. ओं क्षिप स्वाहा.

यत्किञ्चिदभिमन्त्र्य माहेति? क्षिप्तं चेत् सर्पो नश्यति. गरुडाय स्वर्णमेखलाय इदं नागस्य मुखं बन्ध, चक्षुर्बन्ध स्वाहा.'

१६. नागमुखबन्धनमन्त्रः. क्षिप ओं स्वाहा, ओं क्षिप स्वाहा पक्षि ओं स्वाहा.

एते सर्वे जङ्गमविषान्तकाः. ओं क्षं ओं पं ओं ठं. अनेन स्पृश्यमाने विषम् नश्यति.

१७. स्तम्भनभेदः. ओं हा क्षिप ? स्वा प ओं.

१८. बन्धनभेदः. पक्षि स्वाहा ओं.

१९. स्तोभनभेदः. स्वाहा क्षि ओं प.

२०. सङ्क्रामणभेदः. क्षिप ओं स्वाहा। स्वा प ओं क्षि हा स्वाहा पक्षि ओं. क्षिप स्वाहा ओं। स्वा ओं पक्षि स्वा ? हा।

२१. निगळमोचनमन्त्रः. स्वाहा पक्षि ओं.

२१–१. गरुडाय समस्ताय हिरण्यत्रैलोक्यनाथ मठ मठ. मर्दय लोटय मोहय त्रोटय भ्रामय मुञ्च सकेल ? सकलभूतप्रेतपिशाचबेताळादीन्नाशय, सकलग्रहान्नाशय, सकलसर्पविषादीन्नाशय, स्वाहां.

२१–२. ओं नमो महाभगवते महागरुड, सकलसर्पभय हरं ? मे कुरु, सकलवृश्चिकभयहरं मे कुरु, सकलजन्तुभयहरं मे कुरु, सकलवृश्चिकमूषकमार्जारवराहव्याघ्रभल्लुक (श्वान नरादि ?) सकल जीवदष्टभयहरं में कुरु, देवदानवगन्धर्वोरगराक्षसभयहरं मे कुरु, महागरुडाय हुं फट् स्वहा.

२०--३. ओं नमो भगवते खगेश्वराय (भतृ ? स)कल सर्पभयहराय सकलवृश्चिकभयहराय सकलजन्तुविषहराय सकलविषहराय ओं नमः प्रणतार्तिहराय वैनतेयाय हुं फट् स्वाहा

२१–४. ओं नमो भगवते विष्णुवाहनाय प्रकटपराक्रमाय नागान्तकाय महाबलपराक्रमाय तार्क्ष्याय हुं फट् स्वहा.

२२. दष्टोत्थापनमन्त्रस्य ब्रह्मा ऋषिः देवी गायत्री च्छन्दः गरुडो देवता दष्टोत्थापनार्थे विनियोगः । ओं नमो भगवते पक्षिरुद्राय ? विषमुत्समुत्थापय, जल्पय, कोलदष्टमुत्थापय, लं पः मोचय, हन रुद्र गच्छ बन्ध चटः चटुः ताडय मुष्टिना संहर विषं स्वाहा.

२२-१ ओं नमो भगवते गरुडाय चन्द्रदेहाय वज्रमुखाय चन्द्रतुण्डाय वज्रदंष्ट्राय वज्रशाखाय[1] भक्षप्रियाय भक्तरक्षणाय म (हा देवाय मातृमनोरथपूरणाय सकलजगत्सृष्टिस्थितिसं(ह)र्त्रे सर्वज्ञाय सकलविषं आवेशाय स्तम्भय बन्धय भा (भ? य) य उच्चाटय नाशय स्वाहा.

२२-२ ओं नमो भगवते मस्तकललाटनेत्रनासादन्तोष्ठतालु गलहृदयबाहुपाण्युदरकटिगुह्यपायूरुजानुजङ्घपादाङ्गुष्ठ वातपित्तश्लेष्म-ज्वरादि रोगानाकर्षय स्वाहा.

२३. प्रचचण्डगरुडमन्त्रः—

ओं नमो भगवते चण्डाय पक्षिराजाय तीक्ष्णदंष्ट्राकराळया

1. अत्र अक्षराणि गलितानि स्युः ?

सुवर्णदेहाय काश्यपसुताय सर्वसर्पदर्पविध्वंसहेतुभूताय वज्रतुण्ड वज्रशेखरे वज्रचक्रपक्ष प्रहरण, अनन्त वासुकि तक्षक कार्कोटक पद्म महा-पद्म शङ्ख गुलिक इत्यष्टमहानागभूषण, दुष्टमहानाग सर्प (गो?)शत्रो वृश्चिकमूषिकविषत्रयं हन हन पच सूरु भज कंप गन्ध शीघ्र(मा?)वेशय नाशय हं ह्रां ह्रीं ह्रं धीरः? निजशङ्का विषं हर हर स्वहा. चण्डगरुडाय नमः. ओं क्षिप ओं नमो भगवते सहस्रबाहवे पाताळगरुडाय पवनाशनभञ्जनाय मम शमूत्निवारय उच्चाटय शिवं कुरु हुं फट् स्वाहा. अनन्त वासुकि तक्षक कार्कोटक पद्म महापद्म शङ्खपालं गुळिंक सर्वनागाय नमः कालदष्ठभयं? करु दर दर मर्द संहर. तन्मन्त्र-षडङ्गन्यासः.

२४. सर्पस्तम्भनमंन्त्रः.

कुरुकुले हुं फट्. यन्त्रं-भूकोणं? सर्पस्तम्भनं कुरुकुले- ओं गरुड प्रभञ्जन प्रभेदय फट् भू(न?ते)मर्दन विमर्दन स्वाहा-कवचाय हुं, अप्रतिहत शासन कवचाय हुं फट् स्वाहा- नमः सुदर्शनाय स्वाहा-अस्त्राय फट्. भूमण्डले.?

२५. आखूनाम्.

सूं क्ष्मां लं म्वं क्ष्मं,- (अनन्त? आनन्द पञ्चकम्)-आखुनाशनम्. ओं भ्रूं विषं हर क्षि? वसुन्धरात्रि लं गच्छ- ठं-पुस्स्वाहा. विषं हर। अहिमन्त्रौ दग्धं चिन्तयेत्.

२५–१. ओंनमो भगवते खेदक (र) सहस्रभुज(त्रे?) सहस्रनील-मुख विषं दह ह विषभोजन, वज्रदंष्ट्र हन हुं मुष्टिबन्धन. विषं धर ऌ वृ पक्षि हं फट् स्वाहा. सूकरेणाहिं दष्टं खादितं ध्यायेत्। विषापहम्.

२५-२. ओं ह्वः भूम्यां गच्छ विषान्मुक्तोऽसि स्वाहा-विषं हर-ओं ठः ओं ष. क्ष्वेळशोभहृत्.

२६. ओं ह्वां ह्वीं (अ? क)ल्प पर्भक्रिगर्देव? अः धर विर विषान्मुक्तोसि स्वाहा. मूषिक विषनाशनम्. अनेनाभिमन्त्रितेनार्कपुष्पेण तांडयेत्-आखुविषनाशनं भवति.

२७. ओं नमः सर्वमूषकेभ्यो विश्वामित्र आज्ञापयति शीघ्रं गच्छन्तु मूषकाः स्वाहा। त्रेङ्गलारुपमिदं मन्त्रं क्ष्वेळ शोभविनाशनम्॥

२८. ओं कः एः त्राः औः ठः—एतच्चिन्तामणिमनुः। त्रिंशज्ज-पेत्. नारिसविषं हरेत्.

२९. एकशरणे पुः, अशरणे पुः, विशरणे पुः, एष मन्त्रः अखूच्चाटनकरः.

३०. ओंनमः सर्वसिद्धान्तपुरुष हुरु स्वाहा. गुल्गुलुधुपेन सर्षपमिश्र होमेनाखुवि (ष) नाशनम्. ओं सुपर्णदंष्ट्र वक्रदंष्ट्र मत्तवराह मत्तकुञ्जर धुरु धुरु स्वाहा. ओं नमो भगवते वज्रशब्द मूषकमृगवराह-कन्दक? जातु? विषं भक्षय बन्धय तुण्ड आज्ञापय हुं फट्. अनेनोच्चाटनम्.

३१. वृश्चिकमन्त्रः—

ओं घ्रों हुं (ओं? वें?) हिलि पुस्स्वाहा. हूं फट् स्वाहा. दिलि

टिलि पुः, । ब्रह्मणे पुः, विष्णवे पुः, सर्वेभ्यो देवेभ्यः पुः स्वाहा. (वृश्चिकविषनाशनम्).

३२. ओं हुं फट् बरः तिरिः, किटिः, च्छिन्द भिन्द छिलि ? खंगेन छिन्द छेदय, शूलेन भिन्द चक्रेण दारय हुं फट् स्वाहा. (गर्द-भाश्वादिविषहरणं)

३३. ओं नमो भगवते विष्णवे सुखल गरुड भञ्जनः भेदनः विमर्दनः स्वाहा. कवचाय हुं फट् स्वाहा. (क्रिमिकीटादि विषापहं)

३४. ओं क्षें क्ष्णें विषं खात्वा. शातावृत्या विषं हरेत्. अलका धिपते यक्षराज गुह्यकगणाधिप, उल्कादंष्ट्र त्वमेव मे निर्विषं कुरु मा चिराय स्वाहा. (विषापहं)

३५. ओं नमो भगवते गरूडाय महेन्द्ररूपाय पर्वतशिखराकाराय, संहरमोचय द्वालय ? पातय निर्विषममृतमाहर सदृशं भक्षयामि, मे लल. (पक्षहर सनाशनम् ?)

३६. (औषधादौ प्रयोक्तव्यम्)

नमः पुरुषसिंहाय नमो नारायणाय च ।

तथा सौ नाभिजानाति रणे कृष्णपराक्रमम् ॥

एतेन सत्यवाक्येन त्वगदो (मे) प्रसिध्यतु ॥

नमो वै सूर्याय, मातः हुलु रक्ष रक्ष सर्पविषेभ्यः, गौरी चण्डालि मातङ्गिनी हरिमायिनी स्वाहा. (स्थावर विषापहम्).

३७. ओं औं एं नमो भगवते रुद्राय सुपर्णपतङ्ग प्रेताधिपतये गुलुम. गज्जः ? नागान् त्रासय भ्रामय मुञ्च मह्यः. कम्सः ? आविश म ? सुपर्ण पतङ्ग गरुडो आज्ञापयति स्वाहा. (सर्पोच्चाटनम्).

२७–१. क्षिप प्रक्षिप ओं पक्षि ओं स्वाहा. (सर्पोच्चाटनम्)

३८. ओं तार्क्ष्यहस्तः.

इतो व्याख्या–भृगौ दण्डिनी जीवाख्ये साध्य ? हृत्पद्मकोशगो ? तैन्नाणीति ? चन्द्र छन्न भूसद्म ? विन्यसेत्. कर्णे सुधाब्धिमिन्दुं भ्रूमध्ये बिन्दुं च चिन्तयेत्.

कार्यादौ जीवरक्षेयं गज ? बन्धेति भाषणात् ।
अथवा चिन्तयन्नेव मन्त्री मन्त्रमिमं जपेत् ॥

ओं नमो भगवते नील कण्ठाय-ठ ठ. स्याध्यं ? वक्रहसं ? पेयं सर्पिर्वा जीवसंरक्षणं.

२९. जङ्गमं स्थावरं चेति द्विविधं विषमुच्यते ।
जङ्गमं सर्पमूषादि शृङ्ग्यादि स्थावरं विषम् ॥
आद्यस्य षोडशाधारा दंष्ट्राशुक्लद्रतादयः ? ।
दशान्यस्य प्रसूनत्वक्मूलपत्रफलादयः ॥
मन्त्रध्यानौषधाद्यैस्तु तयोः कार्या प्रतिक्रिया ।
शान्त(सन्नार्णि ?)तो ब्रह्मा लोहितस्तारकं शिरः ॥
विपतिर्नाम मन्त्रोऽयं तार्क्ष्यशब्दमयस्स्मृत : ।

४०. ज्वल ज्वल महामति ठं ठं. गरुड 'आडामन ? ठं. ठं. गरुड शिखे ?? ठं. गरुड प्रभञ्जन प्रभञ्जन प्रभेदन प्रभेदन, वित्रासय विमर्दय ठं. अप्रतिहतशासन हुं फट्. उग्रभूतधारक सर्पत्रिसर्पभयंकर भीषय सर्पान्, दह, भस्मीकुरु, ठं.

४१. एवमुक्तानि नेत्राषा ? दीन्यङ्गानि विपतेश्च षं ?
सप्तवर्गान्त्य युग्माष्टदिग्दलं स्वरकेसरम् ॥
विद्रौ ? मद्वह्नि रुद्रान्त्य कर्णिकं मातृकांबुजम् ।
कृत्वा हृदि स्थितं मन्त्री वामहस्ततले स्मरेत् ॥

अङ्गुष्ठादौ न्यसेद्वर्णानि पदे भेदिता जन्धलम् ? ।
पीतं वज्र (क्) चतुष्कोणं पार्थिवं शक्रदैवतम् ॥

वृत्तार्धमाप्यं पद्माङ्कं शुक्लं वरुणदैवतम् ।
त्र्यश्रं स्वस्तिकयुक्तं तत् तैजसं वह्निदैवतम् ॥

वृत्तं बिन्दुयुतं वायुदैवतम् कृष्णमालिनम् ।
अङ्गुष्ठाद्यङ्गुलीमध्यपर्वस्वेतेषु वेश्मसु ॥

सुवर्णनागद्वन्द्वेन वेष्टितेषु न्यसेत् क्रमात् ।
विपतेश्चतुरो वर्णान् स्वमण्डलसमत्विषः ॥

अरूपे र व ? तन्मात्रे आकाशे शिवदैवते ।
क निष्ठामध्यपर्वस्थे न्यसेत्तस्यान्त्यमक्षरम् ॥

नागानामादिवर्णांश्च स्वमण्डलगतान्न्यसेत् ।
भूतादिवर्णान्विन्यस्येदङ्गुष्ठाद्यन्तपर्वसु ॥

तन्मात्रांस्त्रिगुणानाद्यानङ्गुलीषु न्यसेद्बुधः ।
स्पर्शनादेव तार्क्ष्यात्मा हस्तो हन्याद्विषं स्वयम् ॥

मण्डलादियुतान्वर्णान्विषतेः करयोजितान् ।
ज्येष्ठाद्यङ्गुलिभेदेन न्यसेत् स्थानेषु पञ्चसु ॥

अजानुतस्सुवर्णाभमानाभेस्तुहिनप्रभम् ।
कुङ्कुमारुणमाकण्ठादाकेशान्तात् सितेतरम् ॥

अत ऊर्ध्वं नभोवर्णं सर्वं तार्क्ष्यमयं जगत् ।
ब्रह्माण्डव्यापिनं तार्क्ष्यं रक्ताक्षं नागभूषणम् ॥

नीलाभ्रनासमात्मानं महापक्षं स्मरेद्बुधः ।
एवं तार्क्ष्यात्मनो वाक्यं ? मन्त्रस्यान्मन्त्रिणो ? विषे ॥

मुष्टिस्तार्क्ष्यमयस्यान्तःस्थितांगुष्ठा विषापहा ।
तार्क्ष्यहस्तं समुद्यम्य तत्पञ्चाङ्गुलिचालनात् ॥

कुर्याद्विषस्य स्तम्भादि तदुक्तपदवीप्सया ।
आकाशदेशबीजं च पञ्चार्णो विषतेर्मनुः ॥

ह ? स्तम्भयेति वीप्सातो भाषणात् स्तम्भयेद्विषम् ।
व्यत्यस्तभूषयो ? बीजो मन्त्रोऽयं साधुसाधितः ॥

प्लवसः प्लावयसः ? शब्दद्भ्यो ? नाशयेद्विषम्
दष्टमुत्थापयेद्वेष स्वजपांभोऽभिषेकतः ॥
स्वजसशङ्खभेर्यादिनिस्वनश्रवणेन वा ।
स ? दह पच संयुक्तो भूतेजो व्यक्तया ? स्थितः ॥

मन्त्रोऽयं जपमात्रेण विषस्य स्तोभकृद्भवेत् ।
विपते व्यत्ययान्मन्त्रो विषं सङ्क्रामयत्यसौ ॥

वीप्सया सहितो ह्यन्ते तद्योग्यस्य पदस्य च ।
भूव्योमबीजयोर्मन्त्रो व्यत्ययाद्विपतेः कृतः ॥

संक्षिप ह प्रक्षिप ह पदार्थो नाशये द्विषम् ।
भृगुस्साम्बुभगोन्त्यादिकालसर्गान्वितः क्रमात् ॥

सङ्क्रामस्तोभसंस्तम्भनाशकृत् स्वगृहस्थितः ।
दोषः स्वर्गचतुर्ष्वेषु ? स्थित्वा सङ्क्रमणादिकृत् ॥

अन्तस्थैर्निजवेश्मस्थैर्वाताग्नीन्द्रजलात्मभिः ।
तत्तत्कर्म नयेन्मन्त्री गरुडीकृतविग्रहः ॥

कृष्णं विषस्य सङ्क्रामे रक्ताभं स्तोभकर्मणि ।
पीतं स्तम्भे शशिप्रख्यं नाशे तार्क्ष्यं विचिन्तयेत् ॥

धूतपक्षो वहन् विष्णुस्तार्क्ष्यात्मा वायुवेश्मगः ।
रेफेण स्तोभयेद्धत्वा तार्क्ष्यो वह्निगृहे स्थितः ॥

तेनैव मनुना वेशः तथास्यादिति केचन ।
सोऽवष्टम्भितगात्रस्तज्जपन्निन्द्रग्रहे स्थितः ॥

संस्तम्भं कुरुते केचित्? तथा संहार इष्यते
तार्क्ष्यो वरुणदेहस्थस्तज्जपान्नाशयेद्विषम् ॥

अथ तार्क्ष्यस्य पक्षेण नीतं दष्टात् परं नरम् ।
सविषं पन्नगाकारं विषसङ्क्रामकृत् भवेत् ॥

अधीशेन च तारेण युक्तो वाली? भुजङ्गवान् ।
क्रमाद्विषस्य सङ्क्रामस्तोभौ कुर्यात् स्ववेश्मगः ॥

मनुमध्यं दहन्मूर्ध्नि ध्यातं शापादिकोज्ज्वलम्? ।
सतारं व्योम वा तद्वद्दष्टावयवसन्धिषु ॥

विषस्य स्तोभकृत् दग्धगृहवानरकीर्तनात् ।

४१. ओं नमो भगवते गरुडाय कालाग्निवर्णाय एह्येहि कालानललोल-जिह्व, पातय मोहय द्रावय द्रावय भ्रम भ्रामय हन पच हुं फट् स्वाहा.

दष्टमूर्ध्नि ज्वलद्वह्नि? मेयं? नस्य विषाग्निना ।
दह्यमानमिमं ध्यायन् जपेत् स्तोभायुतं मनुम् ।
सोर्ध्वस्थवह्नि शुक्रान्त्यं बिन्दुमद्दष्टमस्तके ॥

चिन्तितं आमृते? स्तोभं तदेवोर्ध्वाग्निलोपतः ।
दष्टादेशकृतथूल? नाभिहृत् कर्णवक्त्रकम् ॥

भृगुस्साषांथिदीर्घाग्नि दण्डु ? स्यास्तोभकरकृम् ।
समस्तविषरोगेष तथा सर्वग्रहादिपु ॥

इन्द्रशत्रुम्दं ? नाम कुलिशोपरि घट्टितम् ।
अन्योन्य पिहिते पणौ स्तम्भकृत् विषसुप्तके ॥

पुटितं भूमिगेहाभ्यां नस्तन्मासां ? सन्धिषु ।
पार्थिवापि ? विषं दष्टं ध्यात्वा संस्तम्भयेद्विषम् ॥

१२. पादे जरुद्ध श्रकाय ? शिरोन्तस्तंभकृत् मनुः ।
ओं वज्रेण स्तम्भय उत् भणे ? स्वाहा ॥

एष सर्वविषस्तम्भं सर्पादीं स्तम्भयेन्मनुः ।
श्वेतस्प ? रकलाधारा स्तन्य धारा समुक्षितः ॥

सरोब्जेऽमृतकुम्भस्थो दष्टो निर्विषतां व्रजेत् ।
दण्डु कुम्भस्थितो मूर्ध्नि ध्वस्ताप्लावितविग्रहः ॥

ध्येयो हृदीन्दु बिम्बं च क्ष्वेळमृत्युज्वरादिहृत् ।
जांत दण्डुन्मु ? पुटितं सुधाम्राविजलापितः ॥

स्नानपानात् सर्पविषज्वररोगापमृत्युजित् ।
मुखवृत्तान्वितं दण्डीभ्यो ? महाही द्वयं न्तु वा ॥

दण्टाङ्गसन्धिषु न्यस्य……………
साग्नीशौ दण्डिनौ शुक्रं विब ? गिचतुरो ? क्षणात्

कनिष्ठाद्यङ्गुलीमध्यपर्वसु क्रमशो न्यसेत् ।
चिन्मन्त्रं च तले न्यस्तं जलं जप्तं सुधामयम् ॥

सबीजं तन्मुखे क्षिप्तमात्रिंयं विषनाशकृत् ।
शशिस्थं सर्गिशुक्रान्त्यं हृदादिस्थं विषं हरेत् ॥

कुम्भस्थं बिन्दुमज्जान्तं हृत्कर्णमुखमूर्ध्वकम् ।
अग ? कपिञ्जलाख्यानात् सुधास्रावि विषं हरेत ।

शिवस्सर्गि वियत् कृष्णन्यस्युस्ये ? दष्टमन्त्रिणोः
भग्नभाण्डसुरापाणां कथया नाशयेद्विषम् ॥

ऐन्द्रस्याप्यगृहस्थस्या न्यस्यास्ये तारकं प्लुतम् ।
पद्ममालाधरश्शत्रो ध्वजाग्रस्थित वायवः ? ॥

पूर्णेन्दुज्यतरस्येन ? क्षीराब्धिं दुस्तरं तरन् ।
दष्टः केनेति कथया श्रुत्वा तद्विस्मयान्वितः ॥

दष्टस्स तु मयेत्येवं दष्टे नष्टविषो वदेत ।
सिद्धो गुरूपदेशेन मुण्डं तार्क्ष्यं तनुर्भयः ॥

आलिख्यालिख्य पूर्णेन्दौ वामहस्तेन मार्ज्जयेत् ।
तत् केवलं हरेत् क्ष्वेळं शृङ्गि···स्तोभकारि च ॥

सविषं विषबन्धाय बीजं तत्र न कथ्यते ।
साग्निस्थाद्या द्वेन्दुपार्श्वं सिप्रमस्याथ किटदिगोः?? ॥

एतत्स्या ? विषहृद्रेखा शिखिद्वयेनारुणात्मिका ।
तज्जप्त्वा मुहुरुद्दिष्टं गमयेद्विषशान्तये ॥

स्मरन्मन्त्रं जपन्वाथ काला रेखास्स्वरादिकाः ।
एकैककलोपादष्टेन गणयेल्ललितान् स्वरान् ॥

दण्डी स्वर्गी सकर्णार्धचन्द्री सर्गी द्वयं नभः ।
कलाकान्तो निरुच्छासस्तत्संजप्यान्तरात्मना ॥

संस्मृत्य दष्टमाकाशं सप्तकृत्वोऽथवा सितं ।
ह इत्युक्त्वा म दष्टोसौ न विषं वेति निर्दिशेत् ॥

भौमाप्याग्नेयवायव्यर्क्षवळहृद्विपतिर्भवेत् ।
तद्विपक्षार्णयोगेन तन्मन्त्रेण द्रुच ? सद्मना ॥

भौमं सर्वाङ्गवैवर्ण्यं मरुतां स्तम्भकृद्विषम् ।
वारुणं कफरोमाञ्चलालागळनिरोधकृत् ॥

वाह्नं स्वेदान्धतातन्द्रीदाहतत्तद्वियोगकृत् ।
वायव्यं वेप ?शोषौ च वैवर्ण्यचलन्त कृत्वा ?
पक्षिराक्षि महापक्षि । पं लं पं लः ।
पक्षि पक्षि क्ष्रीं ह्रां गीं ठं ।
द्वावेतौ पक्षिराणमन्त्रौ विषघ्नावभिमन्त्रभणात् ।
अमृते अमृत पक्षिणि सप्लवसः ? ।
आदौ कं ठं सुधास्रवच्छशिगतं जान्तं विलिख्याभिधा-
वर्णान् ठान्तरितानधोगतमुखान् पङ्क्तौ सुधाप्लावितान् ।

कुड्ये ...ष्टिकाया क्रमेण लिखितान् दष्टस्य पश्यन् जपेत
मन्त्री मन्त्रमिमं परोक्षविषहृत् सिद्धस्त्रिलक्षं जपेत् ॥

हर वष्टिरघु विषहरि ठं विषहरि ह्रीं सर्वविषहरि ह्रीं स्वाहा
च्युतेन कुम्भादमृतेन सिञ्चतीं
महिं (ग) ते ? क्ष्वेळवतस्त्रिशूलिनीम् ।

इमे निजैक्के ? मसितान्तलोचनां
स्मरन् जपेत् मन्त्रमिमं विषापहम् ॥

मुष्टि मुष्टि वज्रमुष्टि ठ । अष्टहंसि पृष्ठहंसि ठं वेदवेदि ठ ।
स्वच्छां काळीं पिशाच्यास्सगुणडमरुकं पश्चिमस्कन्धरूढां

....ङ्गुष्ठमुष्टिद्वययुतवपुषा दंशकेनोरगेण ।
दग्ध्वा सिद्धेन नेत्रत्रयदहनगुणैः क्ष्वेळमापातयन्ती

मात्मानं भावयित्वा त्वविषमिति वदेत्तत्र नास्तीति चोक्तिः ॥
ओं पक्षिराजाय ओं राजपक्षि । ओं धीं थ्रिं ठं क्षरलवतं पक्षि ठं—

—मन्त्रोऽयं भुवि यष्टिकाप्रहरणात् क्ष्वेळं हरेत् गारुडं
ओन्नमो भगवते कनककदेहकार्कोटकशङ्खपाल
विषं हर निर्विषं हुंफट् ।
रेखाः पञ्च विषापहा विपतिकास्तन्मन्त्रिता लङ्घनात् ।
अजमहिणि ठं
सोमस्थस्य मनुः प्रदक्षिणविषेर्जप्त्वाप्ययं क्ष्वेळहृत्
ओन्नमो भगवते अनिलकेशि महाकेशि तवचेद्विमर्द्ध ? वेधि

सदा सर्वमुखं जज्ञे । एरण्डं किमुष्टिक ॰र्यविषं भ्रमणि हुंफट् स्वाहा पक्षि तुं ।

दष्टावेशकरो विषापहरणश्चायं मनुर्मन्त्रणात्

पक्षि पक्षि फं।

श्येनाद्रिष्ठात्य····स्थितमहिमलसद्दंशकं नालिकेरं !

यातः प्राग्ग्रस्यमानं मुहुरिति विषहृत् तज्जपेत् ध्यानयुक्तम्

ओं ठीं धरल व पक्षि हुं फट्ठं ।

स्वाम्मम द्वयाग्रास्सकल····जठरा दष्टमानीय मन्त्रं

जप्त्वा तद्रद्रिलोमादपनयतु वमातज्जयेजा? विपन्नाः ॥

ओं तत्पुरुषाय विद्महे पक्षिदेवाय धीमहि

तन्नोगरुडःप्रचोदयात् ।

पिद्धाहेन ? नशाभदी ? जलजपादेतत्य या साध्यते

गायत्री गरुडस्य सेयमुदिता क्ष्वेळक्रियामृत्तमा ।

शुक्रेन्दो सकलो विरामशिरसो पक्ष्यादिनो द्वौ मनू

पञ्चार्णो विषनाशने विपतिना तुल्यो स्मृतौ गारुडौ ॥

उत्तानस्य मुधागतस्य वसनं न्यस्येत् पिधाने मुधा-

ब्रुवान्दु ! स्थितमम्ब दण्डि शशिनं तत्र स्थितानां? मुखे

कृत्वैवं मनसाऽभिधाप्य च पदं तं मुष्टु मुष्टुतिय ??

न्मन्त्री तत्पिहितांबरापहरणादुत्थापयेद्दंशकम् ॥

दण्डैश्चम्भोगृहमध्यगेन्दुनिहितं जान्तं सुधासंस्रवं
ध्यात्वा स्ताक्ष्र्यकरार्पितेम्भसि विषं तत्प्रोक्षणान्नाशयेत ।
शुक्लान्त्यौ सकलौ सितौ शशिगतौ दष्टस्य मूर्ध्नि स्थितौ
श्वेताम्भोजकरस्य वर्षितसुधाधारौ विषघ्नौ पृथक् ॥
न्यस्यान्यस्य ? च बीजपञ्चकमिमं सर्पाकृतिं चिन्तयन्
रुद्रीभूतधनुर्गुणत्रिशिखया छिन्दन् पुनस्तच्छिरः ।
छेदं च्छेदमथोत्थितं मुहुरमुं याहीति दद्याद्बुधो
यष्टि च्छेदनमीदृशं निरुपमं मन्ये विषच्छेदने ॥
क्षीराम्भःकमलाकरोदरसमुद्भूताम्बुजस्थायिनं
न्यस्ताम्भोवियदिन्दुजान्तविलसन्मूर्धस्थहृन्नाभिकम् ।
व्योमस्थामलताक्ष्र्यशङ्खगसुधाभिःप्लाव्यमानं नरं
ध्यायेन्मन्त्रिवरस्सनष्ट⋯⋯का दष्टस्य मुक्तिर्भवेत्ति ॥
कान्तं कलाकालयुतं स्वहस्त
पद्मस्य मध्ये दलपञ्चकेन ।
ध्यात्वाऽमृतीभूतकरो नरेन्द्र
स्पर्शेन सर्वाणि विषाणि हन्ति ॥

इति

नारायणीये तृतीयः पटलः

## Other books by the same Publisher.

### In Sanskrit

| | | | |
|---|---|---|---|
| *Tápasa Vatsiraja*—by Anangaharshamatru Raja. An important Dramatic work | 2 | 0 | 0 |
| *Sringaraprakasa*—by Bhoja Deva An important literary work. | 3 | 0 | 0 |
| *Kásyapa Samhita*—A work on the nature of serpents and other poisonous creatures, their poisons and their cures. | 3 | 0 | 0 |

### In Telugu

| | | | | |
|---|---|---|---|---|
| Pancharatra Padmasamhita in two parts. | Part I | 4 | 0 | 0 |
| | Part II | 5 | 0 | 0 |
| Ashtasloki by Parasara Bhattaraka with commentary | | 0 | 4 | 0 |

Packing & Postage extra.

Liberal commission on large orders.

*Copies can be had from :—*

**M. C. Thirumalachar.**
9th Main Road, Malleswaram
BANGALORE.

or

**A. Srinivasa Iyengar.**
6th Main Road. Malleswaram,